लोके सज्जनषट्पदैरहरहः पेपीयमानं मुदा
भूयाद्भारतपङ्कजं कलिमलप्रध्वंसि वः श्रेयसे[w] ॥ ५३ ॥

कावेरीहृदयाभिरामपुलिने पुण्ये जगन्मङ्गले
चन्द्राम्भोजवतीतटे परिसरे धात्रा समाराधिते ।
श्रीरङ्गे भुजगेन्द्रभोगशयने लक्ष्मीमहीसेविते
शेते यः पुरुषोत्तमः स भगवान्नारायणः पातु नः ॥ ५४ ॥

प्राजापात्यं प्रथमसुकृतं भानुमत्पौत्रभाग्यं
तेजोऽयोध्याजनपदजुषां जानकीपाणिसम्पत् ।
उत्तुङ्गश्रीनिशिचरपतेरुत्सवश्रीलभूमे-
रुत्सङ्गस्थः कनकसरितो [ वारिपूरो ? ] ऽवतां नः ॥ ५५ ॥

वपुषा वलभिवच्छिलावलम्बी
पदभागुत्तमभक्तभावबिम्बी ।
हिमधामसरस्तटावलम्बी
महिमा रक्षतु वक्षसा कुटुम्बी ॥ ५६ ॥

आयुस्ते शतमस्तु रोगरहितं [ वर्षाण्य ? ] हीनं पुनः
पुत्राः शास्त्रसमन्विताः समधिका भक्तिः परब्रह्मणि ।
किञ्चारोग्यमभङ्गुरं वितरणं विद्या च सर्वोत्तरा
रङ्गाधीशभुजान्तरप्रणयिनीलक्ष्मीकटाक्षेक्षणात् ॥ ५७ ॥

आयुर्दीर्घमरोगतामविकलामैश्वर्यमव्याहतं
पुत्रान्भद्रगुणान्ददातु भवतः सुत्रामतुल्यंपदम् ।
पारावारसुधापयोधरतटीपाटीरपङ्काङ्कितः
श्यामः कामपिता पितामहपिता शेषाङ्कशायी हरिः ॥ ५८ ॥

को वा घोषितमातनोति कलशे मातर्वदेतीरिते
भूतं मा स्पृश मा स्पृशेति कथितो मात्रा हठात् पाणिना ।
तस्यान्तर्नवनीतमण्डममलं प्रोद्धृत्य भूतेन मे
दत्तं दत्तमिति प्रमोदभरितो नृत्यन्हरिः पातु वः ॥ ५९ ॥

मातर्ब्रूहि किमेतदञ्जलिपुटे तातेन गोपाय्यते
वत्स स्वादुफलं प्रयच्छति हरस्तत्त्वं गृहाण स्वयम् ।
मात्रैवं कथिते गुहे विघटयत्याकृष्य सन्ध्याञ्जलिं
शम्भोर्भग्नसमाधिरुद्धमनसो हासोद्गमः पातु वः ॥ ६० ॥

w. Mahābhāratamāhātmya.



भ्रस्यद्विश्वम्भराणि भ्रमितभुवनभृत्कुम्भकुम्भीनसानि
त्रुट्यत्ताराणि टंकद्धरणिधरशिरःश्रेणिशीर्यद्दृषन्ति ।
दिक्कीर्णोदन्वदां विद्रवदमरवधूचक्रचञ्चाद्रियान्ति
व्यस्यन्तु व्यापदं वस्त्रिपुरविजयिनस्ताण्डवाडम्बराणि ॥ ६१ ॥

चञ्चद्देवेन्द्रकुल्यश्चकितदशदिशाकीर्णकोटीरकोट्यः
सङ्गायत्स्वर्वधूट्यः सरभसविनमात्सिद्धगन्धर्वधाट्यः ।
विश्लिष्यच्चर्मचट्यो विगलितशतपत्रासनोद्यत्करोट्यः
त्रुट्यत्कैलासतट्यस्त्रिपुरविजयिनः पान्तु वो ह्यारभट्यः[x] ॥ ६२ ॥

क्षिप्तो हस्तावलग्नः प्रसभमभिहतश्चाददानोंऽशुकान्तं
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः संभ्रमेण ।
आलिङ्गन्योऽवधूतास्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः
कामीवार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः[y] ॥ ६३ ॥

पान्तु वः पद्मनाभस्य नाभिपङ्कजपांसवः ।
मकरन्दरसार्द्रेषु येषु रोहन्ति [ सिद्धयः ? ] ॥ ६४ ॥

नाभीसरोजमवतादरविन्दनाभे-
रन्तर्निविष्टकमलासनकर्णिकारम् ।
आबद्धमूलमभितो मुकुलावलीभि-
रागामिसृष्टिचतुराननगर्भिणीभिः ॥ ६५ ॥

आताम्रपादमवलम्ब्य करेण कृष्णः
संयोजयन्निजमुखे ददतात्सुखं वः ।
त्रैविक्रिमाङ्घ्रिजितबाह्यसमस्तलोकः
कुक्षिप्रविष्टभुवनान्यपि मातुकामः ॥ ६६ ॥

कल्याणमावहतु नः कुहनावराहो
यस्यास्थि( सी स्नि ? ) । निखिलं प्रतिरोमकूपम् ।
आभाति सप्रणयमुद्वहतो धरित्रीं
स्वेदाभिधान इव सात्त्विकहावभेदः ॥ ६७ ॥

x. Sbhg. I. 160. y. Amaruśataka

पायादायासखेदक्षुभितफणिफणारत्ननिर्यत्ननिर्य-
च्छायामायापतङ्गद्युतिमुदितावियं [ त्पद्मिनी ? ] चक्रवालम् ।
अभ्रान्तभ्रान्तचूडातुहिनकरकरालोक [ नीरन्ध्र ? ] नाल-
च्छेदामोदानुधावद्द्रुहिणरथखगं धूर्जटेस्ताण्डवं नः ॥ ६८ ॥

वल्गत्स्वर्गस्रवन्ती प्रपदभरदर [ द्दन्तदिग् ? ] दन्तिपङ्क्ति-
र्वित्रस्तापुष्पगन्धभ्रमणरयसमुध्वस्तसप्ताद्रिसन्धिः ।
पातु क्ष्मावारभीतिप्रवणनिजवधूदुष्परीरम्भजृम्भ-
त्सम्भोगस्तम्भभोगी त्रिदश...( ? ) ताण्डवं काण्डजं वः ॥ ६९ ॥

श्रीवेङ्कटाद्रिनिलयः कमलाकामुकः पुमान् ।
अभङ्गुरविभूतिस्ते तरङ्गयतु मङ्गलम् ॥ ७० ॥

कल्याणमावहतु वः शिवयोस्तदेकं
गात्रं यदीयमसितच्छविकण्ठमूलम् ।
वामेतरेऽपि कुरुते सितभासि भाग-
प्रारब्धशैलतनयापरिणामशङ्काम्[z] ॥ ७१ ॥

मेरूरुकेसरमुदारदिगन्तपत्र-
मामूललम्बिचलशैलशरीरनालम् ।
येनोद्धृतं कुवलयं ललना सलीलं
उत्तंसकार्थमिव पातु स वो वराहः ॥ ७२ ॥

नवं कैरालेपं कलयति धरित्री व्यपभया-
न्न मुक्तास्तामन्विच्छत्युरगनगरभ्रंशभयतः ।
न दत्ते ब्रह्माण्डस्फुटनभयतो घर्घररवं
वराहः संरम्भाद्दिशतु तव सौख्यं त्वविकलम् ॥ ७३ ॥

पृष्ठभ्राम्यदमन्दमन्दरगिरिग्रावाग्रकण्डूयनै-
र्निद्रालोः कमठाकृतेर्भगवतः श्वासानिलाः पान्तु वः ।
यत्संस्कारकलानुवर्तनवशाद्वेलाच्छलेनाम्भसां
यातायातमहर्निशं जलनिधेर्नाद्यापि विश्राम्यति[a] ॥ ७४ ॥

कालिन्दीपुलिनोदरेषु मुसली यावद्गतः क्रीडितुं
तावत्कर्बुरितं पयः पिब हरे वर्धिष्यते ते शिखा ।

---

z. Uiprekṣāvallabha, cf. Sūktimuktāvalī, 19.
a. Sūktimuktāvalī, II. 69.



इत्थं बालतया प्रतारणवशः श्रुत्वा यशोदागिरः
पायाद्वः स शिखां करेण विमृशन्क्षीरेऽर्धपीते हरिः[b] ॥ ७५ ॥

कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया
सत्यं कृष्ण क एवमाह मुसली मिथ्याम्ब पश्याननम् ।
व्यादेहीति विदारिते शिशुमुखे दृष्ट्वा समस्तं जग-
न्माता यस्य जगाम विस्मयवशं पायात्स वः केशवः[c] ॥ ७६ ॥

अङ्गुल्या कः कवाटं प्रहरति कुटिलो माधवः किं वसन्तो
नो चक्री किं कुलालो नहि धरणिधरः किं द्विजिह्वः फणीन्द्रः ।
नाहं घोराहिमर्दी त्वमसि खगपतिर्नो हरिः किं कपीन्द्रः
इत्येवं गोपकन्याप्रतिवचनजडः पातु वः पद्मनाभः[d] ॥ ७७ ॥

कस्त्वं शूली प्रविश भिषजां वेश्म वैद्यं न जाने
स्थाणुर्बाले न वदति तरुर्नीलकण्ठः प्रमुग्धे ।
केकामेकां वद त्वं पशुपतिरबले नैव दृष्टे विषाणे
इत्येवं शैलकन्याप्रतिवचनजडः पातु वः पार्वतीशः ॥ ७८ ॥

योषा का सा [ नि ? ] जेयं तव शिरसि जटामौलिवासा मणिस्र-
क्कामारे कावलामाहर हरदयिते कामिनी का रतिश्च ।
शुभ्रा वाग्देवतेयं वद वद शठ दयिता वच्मि सत्यं त्वमेवे-
त्युक्तिप्रत्युक्तिमाला वितरतु शिवयोर्वः सुभूतिं चिरायुः ॥ ७९ ॥

धन्या केयं स्थिता ते शिरसि शशिकला किं नु नामैतदस्या
नामैवास्यास्तदेतत्परिचितमपि ते विस्मृतं कस्य हेतोः ।
नारीं पृच्छामि नेन्दुं कथयतु विजया न प्रमाणं यदीन्दु-
र्देव्या निह्नोतुमिच्छोरिति सुरसरितं शाठ्यमव्याद्विभोर्नः[e] ॥ ८० ॥

भिक्षार्थीशः क्व यातः सुतनु बलमखे ताण्डवं कुत्र भद्रे
मन्ये वृन्दावनान्ते किमुत मृगशिशुर्नैव जाने वराहः ।
बाले कच्चिन्न नष्टो जरठवृषपतिर्गोप एवात्र वेत्ता
क्रीडावाक्यं तदेतज्जलनिधिहिमवत्कन्ययोः त्रायतां नः ॥ ८१ ॥

पायाद्गजेन्द्रवदनः स इमां त्रिलोकीं यस्योद्धृतेन गगने महता करेण ।
मूलावसक्तसितदन्तबिसाङ्कुरेण नालायितं तपनबिम्बसरोरुहस्य[f] ॥ ८२ ॥

---

b. Līlāśuka's Kṛṣṇakarṇāmṛta, II. 60,
c. Kṛṣṇakarṇāmṛta, II. 64. d. Ibid. III. 105.
e. Mudrārākṣasa, f. Subhāṣitāvali, 80, II. 45

युष्माकमम्बरमणेः प्रथमे मयूखास्ते मङ्गलं विदधतूदयरागभाजः ।
कुर्वन्ति ये दिवसजन्ममहोत्सवेषु सिन्दूरपाटलमुखीरिव दिक्पुरन्ध्रीः[g]
॥ ८३ ॥

शृङ्गारी गिरिजानने सकरुणो रत्यां प्रवीरः स्मरे
बीभत्सोऽस्थिभिरुत्फणी च भयकृन्मूर्त्याद्भुतस्तुङ्गया ।
रौद्रो दक्षविमर्दने च हसकृन्नग्नः प्रशान्तश्चिरा-
दित्थं सर्वरसाश्रयः पशुपतिर्भूयात्सतां भूतये[h] ॥ ८४ ॥

[ हस्तेनैव ? ] विदार्य वक्त्रकुहरादुद्यत्फणान्वासुकेः
तर्जन्या विषकर्बुरांस्तत इतः संस्पृश्य दन्ताङ्कुरान् ।
एकं त्रीणि नवाष्ट सप्त षडिति प्रध्वस्तसंख्याक्रमा
वाचः क्रौञ्चरिपोः शिशुत्वविकलाः श्रेयांसि पुष्णन्तु वः ॥ ८५ ॥

भद्रं वः प्रसुवीत दृप्तदनुजस्वच्छन्दबन्दीकृत-
च्छन्दःस्थेमविधित्सया रचितवान्मात्स्यं वपुर्माधवः ।
संरम्भोत्पतनोन्नमन्निजशिरःसङ्घट्टनिर्भिन्नया
यश्चक्रे विहृतिं बहिर्जलनिधावूर्ध्वाण्डभीत्त्यागतः ( ? ) ॥ ८६ ॥

कूटस्थः कुशलं तनोतु भवतां कूर्मः षडूर्मिस्पृशि
व्याप्ते दुष्कृतिकर्दमे जलनिधावुत्तारकः पैतुषाम् ( ? ) ।
मन्थक्षोणिधरः पयोधिमथने यत्पृष्ठमारोपित-
स्तत्काठिन्यकृतव्यथापरवशः प्रायेण पाथोभ्रमत् ॥ ८७ ॥

एकीभूतसमस्तवारिधिपयःप्राग्भारभारालसः
क्षोणीक्षेमविधानदक्षिणमहोत्साहो वराहोऽस्तु वः ।
कल्पापायघनाघनध्वनिशिरःकुट्टाकघोणारव-
भ्रष्टाखण्डलवैरिवर्गगरिमा निर्वेदविच्छित्तये ॥ ८८ ॥

आतङ्केष्वयमङ्कुरत्सु भवतामासन्नवर्ती भवे-
दापन्मोचनकर्मठः प्रणमतामाश्चर्यकण्ठीरवः ।
यत्प्रादुर्भवनेन धन्यजठरा लोकस्य मातुः श्रियः
श्वश्रूभावमवाप कापि भवतः स्थूणासुराणां रिपुः ॥ ८९ ॥

नाथस्यैष पितुः सतोऽपि जगतां मातृत्वमातन्वतः
पादः पातकभञ्जनाय भवतामह्नाय सन्नह्यतु ।
यत्रावर्जितमम्बुपद्मजनुषा देवेन गौरीपते-
र्मौलौ खेलति मालतीविरचिता मालेव बालेन्दुना ॥ ९० ॥

g. Subhāṣitāvali, 73. h. Śṛṅgāratilaka.



कस्मैचित्प्रतिपाद्य विक्रमजितां विप्राय विश्वंभरा-
मब्धौ वैभवलब्धवासरसिकः क्षेमाय रामोऽस्तु वः ।
श्लाघन्ते रणसीम्नि यस्य चरितं कालाग्निकूलंकष-
ज्वालोद्गारिकुठारकुक्षिनिहितक्ष्मापालचक्रान्जनान् ॥ ९१ ॥

रक्षां वो विदधीत राक्षसवधूवैधव्यविश्राणन-
श्लाघाशात्रवसाधकः स भगवान्धानुष्कधौरेयकः ।
यद्दोस्स्थेमवशंवदे पुरभिदस्तत्तादृशे कार्मुके
रुद्राय स्थिरधन्वने श्रुतिरहो लज्जावती तिष्ठति ॥ ९२ ॥

कालिन्दीतटभेदि हास्तिनपुरीदौस्थ्यादिभिः ख्यापित-
स्थेमा यस्य जयत्यखण्डजगदानन्दैककन्दो भुजः ।
मुष्ट्या निष्ठुरयैष मुष्टिकशिरोनिष्ठ्यूतरक्तच्छटा-
च्छद्मोद्वान्तरुषा भिनत्तु भवतां भद्रेतरं लाङ्गलम् ॥ ९३ ॥

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम् ।
यामाहुः सर्वभूतप्रकृतिरिति यया प्राणिनः प्राणवन्तः
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः[i] ॥ ९४ ॥

आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरी-
धीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः ।
लीलानिर्जितमेघनादविभवो यः कुम्भकर्णव्यथा-
कारी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ ९५ ॥

चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः
श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः ।
कालेष्वब्जभुवो भवन्ति युगपद्ये पुण्यवर्णावली-
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ ९६ ॥

व्यानम्रा दयितानने मुकुलिता मातङ्गचर्माम्बरे
सोत्कम्पा भुजगे निमेषरहिता चन्द्रेऽमृतस्यन्दिनि ।
मीलद्भ्रूः सुरसिन्धुदर्शनविधौ म्लाना कपोलोदरे
पार्वत्या नवसङ्गमप्रणयिनी दृष्टिः शिवायास्तु वः[j] ॥ ९७ ॥

i. Kālidāsa's Śākuntala. j. Ascribed to Bhāsa by Jalhaṇa.

औत्सुक्येन कृतत्वरा सहभुवा व्यावर्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः ।
दृष्ट्वाग्रे धवमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः[k] ॥ ९८ ॥

पादाग्रस्थितया मुहुः स्तनभरेणानीतया नम्रतां
शम्भोः सस्पृहलोचनत्रयपथं यान्त्या तदाराधने ।
ह्रीमत्या शिरसीहितः सपुलकस्वेदोद्गमोत्कम्पया
विश्लिष्यन्कुसुमाञ्जलिर्गिरिजया क्षिप्तोऽन्तरे पातु वः[l] ॥ ९९ ॥

क्रोधेद्धैः दृष्टिपातैस्त्रिभिरुपशमिता वह्नयोऽमी त्रयोऽपि
त्रासार्ता ऋत्विजोऽधश्चपलगणहृतोष्णीषपट्टाः पतन्ति ।
दक्षः स्तौत्यस्य पत्नी विलपति करुणं विद्रुतं चापि देवैः
शंसन्नित्यात्तहासो मखमथनविधौ पातु देव्यै शिवो वः[m] ॥ १०० ॥

तैस्तैः पर्वतधारणप्रभृतिभिस्त्रैलोक्यजीवातुभिः
विस्मेराणि जगन्ति यस्य चरितैराम्रेडितक्रीडितैः ।
तस्याभीरवयस्यताप्रकटितं सौलभ्यमाबिभ्रतः
कंसारेरवतंसयामि चरणौ संसारविध्वंसिनौ ॥ १०१ ॥

धर्मारण्यजलागमस्तदितरारण्यस्य दावानलः
कल्की कैटभमर्दनः स भवतामिष्टाय सश्रेष्टताम् ।
यन्निस्त्रिंशनिकृत्तदस्युरुधिरस्रोतस्तरङ्गावलि-
स्फारस्फारनभीरुणापि कलिना कालेन लीनं क्वचित् ॥ १०२ ॥

कोदण्डकोटिविनिवेशितबाहुदण्ड-
माखण्डलाद्यमरपातितपुष्पवर्षम् ।
आयोधनक्षितिरजःपरिधूसराङ्गं
अव्यात्स्थितं रघुपतेरवसन्नशत्रोः ॥ १०३ ॥

यद्रावणद्विगुणनिस्सृतवज्रपिण्डै-
रुच्चावचानि शिखराण्यपतन्सुमेरोः ।
तस्योत्तमाङ्गनिकरोद्धरणप्रवीणो
रामो हरत्वनुदिनं तव दुष्कृतानि ॥ १०४ ॥

k. Harṣa's Ratnāvalī. l. Ibid. m. Ibid.



मूले चूतमहीरुहस्य निवसन्मूलं जगत्सम्पदां
मोहापायरसायनं प्रणमतां मुग्धेन्दुचूडामणिः ।
कामाक्षीकठिनस्तनाङ्कितवपुर्व्याख्यातकामागमः
कल्याणं भवतां करोतु भगवान्काञ्चीपुरीनायकः ॥ १०५ ॥

जम्भारातीभकुम्भोद्भवमिव दधतः सान्द्रसिन्दूररेणुं
रक्तैः सिकता इवौघैरुदयगिरितटीधातुधाराद्रवस्य ।
आयान्त्या तुल्यकालं कमलवनरुचेवारुणा वो विभूत्यै
भूयासुर्भासयन्तो भुवनमभिनवा भानवो भानवीयाः[n] ॥ १०६ ॥

भक्तिप्रह्वाय दातुं मुकुलपुटकुटीकोटरक्रोडलीनां
लक्ष्मीमाक्रष्टुकामा इव कमलवनोत्पाटनं कुर्वते ये ।
कालाकारान्धकारानन पतितजगत्साध्वसध्वंसकल्याः
कल्याणं वः क्रियासुः किसलयरुचयस्ते करा भास्करस्य ॥ १०७ ॥

गर्भेष्वम्भोरुहाणां शिखरिषु च शिताग्रेषु तुल्यं पतन्तः
प्रारम्भे वासरस्याप्युपरतिसमये चैकरूपास्तथैव ।
निष्पर्यायं प्रवृत्तास्त्रिभुवनभवनप्राङ्गणे पान्तु युष्मा-
नूष्माणं सन्तताध्वश्रमजामिव भृशं बिभ्रतो ब्रध्नपादाः ॥ ॥ १०८ ॥

प्रभ्रश्यत्युत्तरीयत्विषि तमसि समुद्वीक्ष्य वीतावृतीन्द्रा-
ग्जन्तूंस्तन्तून्यथा यानतनु वितनुते तिग्मरोचिर्मरीचीन् ।
ते सान्द्रीभूय सद्यः क्रमविशददशाशादशालीविशालं
शश्वत्सम्पादयन्तोऽम्बरममलमलं मङ्गलं वो दिशन्तु ॥ १०९ ॥

न्यक्कुर्वन्नोषधीशे मुषितरुचि शुचेवौषधीः प्रोषिताभा
भास्वद्ग्रावोद्गतेन प्रथममिव कृताभ्युद्गतिः पावकेन ।
पक्षच्छेदव्रणासृक्स्रुत इव दृषदो दर्शयन्प्रातरद्रेः
आताम्रस्तीव्रभानोरनभिमतनुदे स्तादुभस्त्युद्गमो वः ॥ ११० ॥

शीर्णघ्राणाङ्घ्रिपाणीन्व्रणिभिरपघनैर्घर्घराव्यक्तघोषा-
न्दीर्घाघ्रातानघौघैः पुनरपि घटयत्येक उल्लाघयन्यः ।
घर्मांशोस्तस्य वोऽन्तर्द्विगुणघनघृणानिघ्ननिर्विघ्नवृत्ते-
र्दत्तार्घ्याः सिद्धसंघैर्विदधतु घृणयः शीघ्रमंहोविघातम् ॥ १११ ॥

n. १०६-११५ Mayūra's Sūryaśataka, vv, 1-10.

विभ्राणा वामनत्वं प्रथममथ तथैवांशवः प्रांशवो वः
क्रान्ताकाशान्तरालास्तदनु दश दिशः पूरयन्तस्ततोऽपि ।
ध्वान्तादाच्छिद्य देवद्विष इव बलिनो विश्वमाश्वश्नुवानाः
कृच्छ्राण्युच्छ्रायहेलोपहसितहरयो हारिदश्वा हरन्तु ॥ ११२ ॥

उद्गाढेनारुणिम्ना विदधति बहुलं येऽरुणस्यारुणत्वं
मूर्धोद्धूतौ खलीनक्षतरुधिररुचो ये रथाश्वाननेषु ।
शैलानां शेखरत्वं श्रितशिखरिशिखास्तन्वते ये दिशन्तु
प्रेङ्खन्तः खे खरांशोः खचितदिनमुखास्ते मयूखाः सुखं वः ॥ ११३ ॥

दत्तानन्दाः प्रजानां समुचितसमयाकृष्टसृष्टैः पयोभिः
पूर्वाह्णे विप्रकीर्णा दिशि दिशि विरमत्यह्नि संहारभाजः ।
दीप्तांशोर्दीर्घदुःखप्रभवभवभयोदन्वदुत्तारनावः
गावो वः पावनानां परमपरिमितां प्रीतिमुत्पादयन्तु ॥ ११४ ॥

बन्धध्वंसैकहेतुं शिरसि नतिवशाबद्धसन्ध्याञ्जलीनां
लोकानां ये प्रबोधं विदधति विपुलाम्भोजषण्डाशयेव ।
युष्माकं ते स्वचित्तप्रथिमपृथुतरप्रार्थनाकल्पवृक्षाः
कल्पन्तां निर्विकल्पं दिनकरकिरणाः केतवः कल्मषस्य ॥ ११५ ॥

## ॥ विप्रप्रशंसा पद्धतिः ॥ ५ ॥

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥ १ ॥

स्वमेव ब्राह्मणो भुङ्क्ते स्वं वस्ते स्वं ददाति च ।
आनृशंस्याद्ब्राह्मणस्य भुञ्जते हीतरे जनाः ॥ २ ॥

हालाहलादपि विषाद्ब्रह्मस्वं विषमुच्यते ।
विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रकम् ॥ ३ ॥

ब्राह्मणानां गवां चैव कुलमेकं द्विधा कृतम् ।
एकत्र मन्त्रास्तिष्ठन्ति हविरन्यत्र तिष्ठति ॥ ४ ॥

दैवाधीनं जगत्सर्वं मन्त्राधीनं तु दैवतम् ।
तन्मन्त्रं ब्राह्मणाधीनं ब्राह्मणो दैवतं महत् ॥ ५ ॥



गतश्रीर्गणकान्द्वेष्टि गतायुश्च चिकित्सकम् ।
गतश्रीश्च गतायुश्च ब्राह्मणं द्वेष्टि भारत ॥ ६ ॥

न स्कन्दते न व्यथते न विनश्यति कर्हिचित् ।
वरिष्ठमग्निहोत्रेभ्यो यद्ब्राह्मणस्य मुखे हुतम्° ॥ ७ ॥

यस्यास्येन सदाश्नन्ति हव्यानि त्रिदिवौकसः ।
कव्यानि चैव पितरः किं भूतमधिकं ततः ॥ ८ ॥

अविद्यो वा सविद्यो वा ब्राह्मणो दैवतं महत् ।
प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ ९ ॥

तपस्तप्त्वासृजद्ब्रह्मा ब्राह्मणान्वेदगुप्तये ।
तृप्त्यर्थं पितृदेवानां धर्मसंरक्षणाय च ॥ १० ॥

ब्राह्मणाः कस्य वक्तव्याः कस्य वा च्छन्दचारिणः ।
गुणैरेव वसन्त्येते कामगाः पक्षिणो यथा ॥ ११ ॥

सत्यं दमस्तपो दानमहिंसेन्द्रियनिग्रहः ।
दृश्यन्ते यत्र राजेन्द्र स ब्राह्मण उदाहृतः ॥ १२ ॥

अहिंसानिरतो नित्यं जुह्वानो जातवेदसि ।
स्वदारनिरतो दान्तः सर्वैर्ब्राह्मण उच्यते ॥ १३ ॥

शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला इव सूर्यकान्तास्तदन्यतेजोभिभवाद्वमन्ति‡ ॥ १४ ॥

ब्रह्मस्वाशनपुष्टानि वाहनानि महान्त्यपि ।
नाशमायान्ति सर्वाणि शरन्मेघा इवाम्बरे ॥ १५ ॥

ब्रह्मस्वं प्रणयाद्भुक्तं दहत्यासप्तमं कुलम् ।
विक्रमेण तु यद्भुक्तं दश पूर्वान्दशापरान् ॥ १६ ॥

यद्ब्राह्मणास्तुष्टतमा वदन्ति तद्देवताः कर्मभिराचरन्ति ।
तुष्टेषु तुष्टाः सततं भवन्ति प्रत्यक्षदेवेषु परोक्षदेवाः ॥ १७ ॥

---

o. Manu.

This and the following general references to sources are taken from the *Sūktiratnahāra*, (Trivandrum Sanskrit Series, 1938).

‡ Kālidāsa's Śākuntala.

मन्त्राः कृष्णाजिनं दर्भाः ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि प्रयोज्यानि पुनः पुनः ॥ १८ ॥

समस्तसम्पत्समवाप्तिहेतवः समुत्थितापत्कुलधूमकेतवः ।
अपारसंसारसमुद्रसेतवः पुनन्तु मां ब्राह्मणपादपांसवः ॥ १९ ॥

आपत्कुलध्वान्तसहस्रभानवः समीहितार्थार्पणकामधेनवः ।
समस्ततीर्थाम्बुपवित्रमूर्तयो रक्षन्तु मां ब्राह्मणपादपांसवः ॥ २० ॥

अज्ञानध्वान्तदुर्लक्षविषयाघटसंकटे ।
व्रजन्भवबिले दीपं द्विजसंघं भजेत्सुधीः ॥ २१ ॥

मात्सर्याद्वा वृथा द्वेषाद्विजसंघं हि यस्त्यजेत् ।
सन्मार्गदर्शनं मूढः स हन्यात्स्वे तु चक्षुषी ॥ २२ ॥

द्विजसङ्गं कथं जह्याममृतास्वादसत्फलम् ।
खलसङ्गं कथं कुर्यां भवाग्न्युद्दीपनानिलम् ॥ २३ ॥

विष्णोः सर्वमयस्यापि प्रधानास्तनवो द्विजाः ।
कथं जन्म वृथा कुर्यां त्यक्त्वा तैः सङ्गतिं गुरो ॥ २४ ॥

गोब्राह्मणाः परं दैवं हव्यमन्त्रात्मका यतः ।
विष्णुशक्तिस्तदाधारा समस्तजगदाश्रया ॥ २५ ॥

सर्वदैवोपजीव्यन्ति यदिष्टा दैवयोनयः ।
देवानामपि देवेभ्यस्तेभ्यः को न नमेद्बुधः ॥ २६ ॥

जगद्रथव्या ... ... ...*

## ॥ वेदप्रशंसापद्धतिः ॥६॥

वेदस्वीकरणं पूर्णं विचारोऽभ्यसनं जपः ।
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा ॥ १ ॥

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम् ।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः ॥ २ ॥

* The manuscript breaks off here. Only the Saṅgraha is followed up to Dambha-paddhati in the text.



अनभ्यासेन वेदानामाचारस्य च लङ्घनात् ।
आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥ ३ ॥

ज्ञातव्यः सर्वथैवार्थो वेदानां कर्मसिद्धये ।
पाठमात्रावसायी तु पङ्के गौरिव सीदति ॥ ४ ॥

## ॥ हितोपदेशपद्धतिः ॥ ७ ॥

अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च वर्धनम्[1] ।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मभिः ॥ १ ॥

यदीच्छसि वशीकर्तुं जगदेकेन कर्मणा ।
परापवादसस्येभ्यो गाश्चरन्तीर्निवारय ॥ २ ॥

चिन्तनीया हि विपदामादावेव प्रतिक्रिया ।
न कूपखननं युक्तं प्रदीप्ते वह्निना गृहे ॥ ३ ॥

सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥ ४ ॥

दरिद्रान् भर कौन्तेय न समृद्धान् कदाचन ।
व्याधितस्यौषधं पथ्यं नीरोगस्य[3] किमौषधैः ॥ ५ ॥

दानं वित्ताद्दृतं वाचः कीर्तिधर्मौ तथायुषः ।
परोपकरणं कायादसारात्सारमुद्धरेत् ॥ ६ ॥

नित्यं कोपात्तपो रक्षेच्छ्रियं रक्षेच्च मत्सरात् ।
विद्यां मानावमानाभ्यामात्मानं च प्रमादतः ॥ ७ ॥

अलं दानेन विप्रेन्द्र यजनाध्ययनेन वा ।
इदं तत्स्वर्गसोपानममलं यत्प्रियं वचः ॥ ८ ॥

प्रियवाक्यप्रदानेन सर्वे तुष्यन्ति जन्तवः ।
तस्मात्तदेव वक्तव्यं वचने का दरिद्रता ॥ ९ ॥

सम्पदो जलतरङ्गविलोला यौवनं त्रिचतुराणि दिनानि ।
शारदाभ्रपरिपेलवमायुः किं धनैः परहितानि कुरुध्वम् ॥ १० ॥

१. °प्रं°-$S_1$. °प्रात्-$S_1$. २. सञ्चयम्-$S_2$. ३ °रुज°-$S_2$.

## ॥ आचारपद्धतिः ॥ ८ ॥

आचाराल्लभते ह्यायुराचारादीप्सिताः प्रजाः।
आचाराद्धनमक्षय्यमाचारो हन्त्यलक्षणम् ॥ १ ॥

वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ २ ॥

न जातिर्न कुलं तात न स्वाध्यायो न च श्रुतम्।
कारणानि द्विजत्वस्य वृत्तमेव हि कारणम्[p] ॥ ३ ॥

## ॥ अनाचारपद्धतिः ॥ ९ ॥

कपाले यद्वदापः स्युः श्वदृतौ वा यथा पयः।
आश्रयस्थानदोषेण वृत्तहीने तथा श्रुतम् ॥ १ ॥

ये नास्तिका निष्क्रियाश्च गुरुशास्त्रातिलङ्घिनः।
अधर्मज्ञा गताचारास्ते भवन्ति गतायुषः ॥ २ ॥[q]

## ॥ धर्मपद्धतिः ॥ १० ॥

धर्मः श्रुतो वा दृष्टो वा स्मृतो वा कथितोऽपि वा।
संमोदितो वा राजेन्द्र पुनाति पुरुषं सदा ॥ १ ॥

यस्य धर्मविहीनानि दिनान्यायान्ति यान्ति च।
स लोहकारभस्त्रेव श्वसनेऽपि न जीवति ॥ २ ॥

नाच्छादयति कौपीनं न दंशमशकापहम्।
शुनः पृच्छमिव व्यर्थं पाण्डित्यं धर्मवर्जितम् ॥३॥

## ॥ अधर्मपद्धतिः ॥ ११ ॥

अधर्मेणैधते तावत्ततो भद्राणि पश्यति॥
ततः सपत्नान् जयति समूलस्तु विनश्यति ॥ १ ॥[r]

१ चा – $S_1$.   २ वांपार्थे–$S_1$. २ °कु°–$S_1$.
p. Mahābhārata.   q. Mahābhārata   r. Rāmāyaṇa.



एकः पापानि कुरुते फलं भुङ्क्ते महाजनः।
भोक्तारस्तत्र मुच्यन्ते कर्ता दोषेण लिप्यते ॥ २ ॥[s]

शारीरैः कर्मदोषैश्च याति स्थावरतां नरः।
वाचिकैः पक्षिमृगतां मानसैरन्त्यजातिताम् ॥ ३ ॥[t]

## ॥ सत्यपद्धतिः॥ १२ ॥

न[३] तथ्यवचनं सत्यं [४]नातथ्यवचनं मृषा।
यद्भूतहितमत्यन्तं तत्सत्यमितरन्मृषा ॥ १ ॥

न नर्मयुक्तं ह्यनृतं हिनस्ति न स्त्रीषु राजन्न विवाहकाले।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥ २ ॥[u]

## असत्यपद्धतिः ॥ १३ ॥

पञ्च पश्वनृते हन्ति दश हन्ति गवानृते।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ १ ॥

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन्।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदः ॥ २ ॥

## दानपद्धतिः॥ १४ ॥

शतेषु जायते शूरः सहस्रेषु च पण्डितः।
वक्ता शतसहस्रेषु दाता भवति वा न वा ॥ १ ॥[v]

आयासशतलब्धस्य प्राणेभ्योऽपि गरीयसः।
गतिरेकैव वित्तस्य दानं शेषा विपत्तयः ॥ २ ॥

कुलं शीलं श्रुतं शौर्यं सर्वमेतन्न गण्यते।
दुर्वृत्ते वा सुवृत्ते वा जनो दातरि रज्यते ॥ ३ ॥[w]

३ सत्यवचनम्–$S_1$. ४ °तत्त्व°–$S_1$.
१. वदेत् . $S_1$ .   २. ° भूतयः – $S_1$ .
s. Mahābhārata.   t. Manu.
u. Mahābhārata.   v. Pañcatantra.   w. Cāṇakya

यस्यान्नपानपुष्टाङ्गः कुरुते धर्मसञ्चयम् ।
अन्नस्य दातुस्तस्यार्धं कर्तुश्चार्धं न संशयः ॥ ४ ॥

दातृयाचकयोर्भेदः कराभ्यामेव दर्शितः ।
एकस्य गच्छताधस्तादुपर्यन्[3]यस्य तिष्ठता ॥ ५ ॥[x]

दुर्भिक्षे चान्नदातारं सुभिक्षे च हिरण्यदम् ।
भये चाभयदातारं स्वर्गेऽपि बहुमन्यते ॥ ६ ॥[y]

आक्रम्य यद्द्विजैर्भुङ्क्ते परिक्षीणैश्च बन्धुभिः ।
गोभिश्च नरशार्दूल राजसूयाद्विशिष्यते ॥ ७ ॥

तपः परं कृतयुगे त्रेतायां ज्ञानमुच्यते ।
द्वापरे यज्ञमेवाहुर्दानमेव कलौ युगे ॥ ८ ॥

दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य ।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥ ९ ॥

अतिसाहसमतिदुष्करमत्याश्चर्यं च दानमर्थानाम् ।
यो[1] हि ददाति शरीरं न ददाति स वित्तलेशमपि ॥ १० ॥[z]

देशः कालः पात्रं वितरति वित्तस्य कमपि महिमानम् ।
अब्धितले शुक्तिपुटे स्नातं घनतोयमेति मणिभावम् ॥ ११ ॥

दानं यत्प्रथमोपकारिषु न तन्[2]न्यूनस्तु तैराप्यते
दीने याचनमूल्यमेव दयिते तत्किं न रागास्पदम् ।
पा[3]त्रे यत्फलविस्तराप्रियतया तद्वार्धुषिक्यं न किं
तद्दानं यदुपेत्य निष्प्रणयिनि क्षीणे जने दीयते ॥ १२ ॥

विद्या प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषक् मित्रं दानं मित्रं मरिष्यतः ॥ १३ ॥

## ॥ अदानपद्धतिः ॥ १५ ॥

वात्यातिपातसिकताचयशर्कराङ्गः कण्ठावसक्तशयनस्थतृणावलीकः ।
निर्मांसतागर्[4]डुलमात्मन एव जानुमालिङ्ग्य शेत इति यत्तदशान्त्यदानात् ॥ १ ॥

३. ° न्येन – $S_1$ .

१ योऽपि–$S_1$. २. तन्न्यायस्तु–$S_1$. ३. °ते–$S_1$. ४. °दु°–$S_1$.

x. Bṛhatkathā. y. Mahābhārata. z. Kalāvilāsa.



यत्सारमेयरसनापरिलीढशिष्ट-
मल्पं कदन्नमनिशं क्षुधितः कपाले ।
आलेढि सान्द्रमलदिग्धनखाङ्गुलीभिः
स्थूलोपलोत्करतुषं तदशान्त्यदानात् ॥ २ ॥

## ॥ तपःपद्धतिः ॥ १६ ॥

अहिंसा सत्यवचनमानृशंस्यं दमो घृणा ।
एतत्तपो विदुर्धीरा न शरीरस्य शोषणम् ॥ १ ॥

वनेऽपि दोषाः प्रभवन्ति रागिणां गृहेषु पञ्चेन्द्रियनिग्रहस्तपः ।
अकुत्सिते कर्मणि यः प्रवर्तते निवृत्तरागस्य गृहं तपोवनम् ॥ २ ॥[a]

## ॥ अहिंसापद्धतिः ॥ १७ ॥

सर्ववेदाभिगमनं सर्वतीर्थावगाहनम् ।
सर्वयज्ञफलं चैव नैव तुल्यमहिंसया ॥ १ ॥

अहिंसानिरता नित्यं वन्दनीयाः प्रयत्नतः ।
तैरेव धार्यते नित्यं चराचरमिदं जगत् ॥ २ ॥

एकान्तशीलस्य दृढव्रतस्य
पञ्चेन्द्रियप्रीतिनिवर्तकस्य ।
अध्यात्मयोगे दृढमानसस्य
मोक्षो यथा नित्यमहिंसकस्य ॥ ३ ॥

## ॥ क्षमापद्धतिः ॥ १८ ॥

श्र[1]मो न वाचां शिरसो न लूनं
न चित्ततापो न तनोर्विमर्दः ।
न चापि हिंसादिरनर्थयोगः
श्लाघ्या परं क्रोधजये क्षमैका ॥ १ ॥

a. ascribed to Kālidāsa in Sūktiratnahāra ( TSS, p. 261 ).

१. °क्र°–$S_1$

क्रुद्धे स्मेरमुखावधारणमथो द्विष्टे प्रसादक्रमो
　　व्याक्रोशे कुशलोक्तिरात्मदुरितच्छेदोत्सवस्ताडने ।
धिग्जन्तोरजितात्मनोऽस्य महतो[1] दैवादपेता विप-
　　द्दुर्वारातिदयारसार्द्रमनसः क्रोधस्य कुत्रोदयः ॥ २ ॥

एकः क्षमावतो दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ३ ॥

## ॥ दयापद्धतिः ॥ १९ ॥

[2]कामधेनुधरादीनां दातारः सुलभा भुवि ।
दुर्लभः पुरुषो लोके सर्वभूतदयापरः ॥ १ ॥

फलाभिलाषोपहतान्तरात्मा प्रतीक्षते पात्रविशेषमेव ।
कृपालुकस्त्वर्थितयैव तुष्टः प्रवर्तते दीनजनेषु दातुम् ॥ २ ॥[b]

## ॥ दमपद्धतिः ॥ २० ॥

दमं नैश्रेयसं प्राहुर्वृद्धा निश्चयदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ १ ॥

## ॥ शीलपद्धतिः ॥ २१ ॥

विद्याभ्यासः सर्वभूतानुकम्पा प्राण्यद्रोहः सत्यवादो प्रमादः ।
शौचाचारो देवताभक्तियुक्तः शीलं शश्वत्पालनीयं बुधानाम् ॥ १ ॥

ऐश्वर्यस्य विभूषणं चतुरता शौर्यस्य वाक्संयमो
रूपस्योपशमः श्रुतस्य विनयो वित्तस्य पात्रे व्ययः ।
अक्रोधस्तपसः क्षमा प्रभवतो धर्मस्य निर्व्याजता
सर्वेषामपि सर्वसाधनमिदं शीलं परं भूषणम् ॥ २ ॥

वह्निस्तस्य जलायते जलनिधिः कुल्यायते तत्क्षणात्
मेरुः स्वल्पशिलायते मृगपतिः सद्यः कुरङ्गायते ।
व्यालो माल्यगुणायते विषरसः पीयूषवर्षायते
यस्याङ्गेऽखिललोकवल्लभतमं शीलं समुन्मीलति ॥ ३ ॥

१. °ती–$S_1$.　२. हेम°–$S_1$.
b. Mahābhārata.



सर्वे कङ्कणकेयूरकुण्डलप्रतिमा गुणाः ।
शीलं चाकृत्रिमं लोके लावण्यमिव भूषणम् ॥ ४ ॥

विदेशेषु धनं विद्या व्यसनेषु धनं मतिः ।
परलोकधनं धर्मः शीलं च निखिलं धनम् ॥ ५ ॥

## ॥ गृहस्थधर्मपद्धतिः ॥ २२ ॥

अहिंसा सत्यवचनं सर्वभूतानुकम्पनम् ।
[1]शमो दानं यथाशक्ति गार्हस्थो[2] धर्म उच्यते ॥ १ ॥

दूरादतिथयो यस्य गृहमायान्ति निर्वृताः ।
गृहस्थः स तु विज्ञेयः शेषास्तु गृहरक्षिणः ॥ २ ॥[c]

चत्वारस्तु तात गृहे वसन्तु[3]
　　श्रियाभियुक्तस्य गृहस्थधर्मे ।
श्रान्तो ज्ञातिरवसन्नः कुलीनः
　　[4]सखा दरिद्रो भगिनी चानपत्या ॥ ३ ॥

स्वधर्मकर्मार्जितजीवितानां स्वेष्टेषु दारेषु सदा रतानाम् ।
जितेन्द्रियाणामतिथिप्रियाणां गृहे[5]ऽपि मोक्षः पुरुषोत्तमानाम् ॥ ४ ॥[d]

## ॥ पतिपद्धतिः ॥ २३ ॥

पतिर्हि भूषणं नार्या भूषणं भूषणादपि ।
एषा विरहिता तेन भूषणार्हा न शोभते ॥ १ ॥[e]

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत तथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥ २ ॥[f]

पत्या विना जीवति या न सा जीवत्यसंशयम् ।
पत्या विना मृतिः श्रेयो नार्याः क्षत्रियपुङ्गव ॥ ३ ॥[g]

१. द०-$S_1$. २ स्थ्यो–$S_1$. ३. ०ति–$S_2$. ४. स्वसा दरिद्रा–$S_1$.
५. ०षु–$S_1$.
c. Mārkaṇḍeya　d. Mahābhārata　e. Rāmāyaṇa
f. Manu.　g. Mahābhārata.

## ॥ साध्वीपद्धतिः ॥ २४ ॥

कायक्लेशेन महता पुरुषः प्राप्नुयात्फलम् ।
तत्सर्वं लभते नारी सुखेन पतिपूजया ॥ १ ॥

प्रहृष्टमानसा नित्यं स्थानमानविचक्षणा ।
भर्तुः प्रीतिकरी या तु सा भार्याऽथेतरा जरा ॥ २ ॥[h]

न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
अरण्यसदृशं ह्येतद्यत्तया रहितं सदा ॥ ३ ॥[i]

शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने
भर्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः ॥
भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः ॥ ४ ॥[j]

## ॥ विद्वत्पद्धतिः ॥ २५ ॥

विद्वत्त्वं च नृपत्वं च नैव तुल्यं कदाचन ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ १ ॥

प्राज्ञोऽपि जल्पतां पुंसां श्रुत्वा वाचः शुभाशुभाः ।
गुणवद्वाक्यमादत्ते हंसः क्षीरमिवाम्भसः ॥ २ ॥

प्रस्तावसदृशं वाक्यं स्वभावसदृशं प्रियम् ।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥ ३ ॥[k]

यत्र सूक्तं दुरुक्तं वा समं स्यान्मधुसूदन ।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनम् ? ॥ ४ ॥[l]

विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।
न हि वन्ध्या विजानाति गुर्वीं प्रसववेदनाम् ॥ ५ ॥[m]

अश्वः शस्त्रं शास्त्रं वीणा वाणी नरश्च नारी च ।
पुरुषविशेषं प्राप्ता भवन्त्ययोग्याश्च योग्याश्च ॥ ६ ॥[n]

---

h. Dakṣasmṛti
i. Itihāsasamuccaya.
j. Sākuntala.
k. Mahābhārata.
l. Mahābhārata
m. Nītiśāstra
n. Kalāvilāsa



निन्दन्तु नीतिनिपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथो न विचलन्ति पदं महान्तः ॥ ७ ॥[o]

## ॥ अज्ञपद्धतिः ॥ २६ ॥

निर्धनश्चापि कामार्थी दरिद्रः कलहप्रियः ।
मन्दशास्त्रो विवादार्थी त्रिविधं मूर्खलक्षणम् ॥ १ ॥

अनाहूतः सम्प्रविशत्यपृष्टो बहु भाषते ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूर्ख[1]चेतसम् ॥ २ ॥[p]

आत्मप्रशंसिनं धृष्टं दुष्टं विपदि[2] धावकम् ।
सर्वदो[3]त्सिक्तचण्डं च लोकः सत्कुरुते नरम् ॥ ३ ॥[q]

नमन्ति फलिता वृक्षा नमन्ति च बुधा जनाः ।
शुष्ककाष्ठानि मूर्खाश्च भिद्यन्ते न नमन्ति च ॥ ४ ॥[r]

कालप्राप्तं महारत्नं यो न गृह्णात्यबुद्धिमान् ।
अन्यहस्तगतं दृष्ट्वा पश्चात्स परितप्यते ॥ ५ ॥

मूर्खा न द्रष्टव्या द्रष्टव्याश्चेन्न तैस्तु सह तिष्ठेत् ।
यदि तिष्ठेन्न कथयेद्यदि कथयेन्मूर्खवत्कथयेत् ॥ ६ ॥[s]

उच्चैरुच्चरितव्यं यत्किंचिदजानतापि पुरुषेण ।
मूर्खा बहुमन्यन्ते विदुषामपि संशयो भवति ॥ ७ ॥

स्तब्धप्रकृतिर्लोके बहुमानमुपैति नातिशयमत्र[4] ।
स्फुटमत्रोदाहरणं पयोधरः कुवलयाक्षीणाम् ॥ ८ ॥

शाठ्येन मित्रं कपटेन धर्मं परोपतापेन समृद्धभावम् ।
सुखेन विद्यां परुषेण नारीं वाञ्छन्ति ये नूनमपण्डितास्ते ॥ ९ ॥

एकं हि चक्षुरमलं सहजो विवेको
विद्वद्भिरेव सह संवसनं द्वितीयम् ।

---

o. Bhartṛhari
p. Mahābhārata
q. Rāmāyaṇa
r. Vyāsaśataka.
s. Sundarapāṇḍya

°कः $S_1$ १ °ह° $S_1$ २ °रि[१]–$S_1$ ३ द्रिक्तचण्डं $S_1$ ४. [४]नम्रः–$S_1$

यस्यास्ति न द्वयमिदं स्फुटमेव सोऽन्धः
तस्यापमार्गचलने वद कोऽपराधः ॥ १० ॥

काव्येन मूर्खधनिनं प्रणयेन नीचं
वेश्यां श्रुतेन शठशात्रवमार्जवेन ।
इच्छन्ति ये जगति वञ्चयितुं[1] विमूढाः
तेषामरण्यरुदितेन समः प्रयासः ॥ ११ ॥[t]

## ॥ सज्जनपद्धतिः ॥ २७ ॥

सद्भिरेव सहासीत सद्भिः कुर्वीत सङ्गतिम् ।
सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥ १ ॥[u]

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः ।
न हि संहरते ज्योत्स्नां चन्द्रश्चण्डालवेश्मनः[2] ॥ २ ॥

साधोः परुषवाक्येन न मनो याति विक्रियाम् ।
न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥ ३ ॥

गुणवज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ ४ ॥

सत्सु कार्यवतां पुंसामलमेवाग्रतः स्थितिः ।
वाग्वृत्तिरधिका सा चेत्करोत्युभयलाघवम् ॥ ५ ॥[a]

सुवृत्तस्यैकरूपस्य परप्रीत्यै धृतोन्नतेः[3][4] ।
साधोः स्तनयुगस्येव पतनं कस्य तुष्टये ॥ ६ ॥

वरं तस्करसम्बन्धः सुजनैः सह सङ्गमात् ।
तस्करो हि हरत्यर्थं साधुस्तु हृदयं हरेत् ॥ ७ ॥

विद्यामदो धनमदस्तृतीयोऽभिजनो[5] मदः ।
एते मदावलिप्तानामेत एव सतां दमाः ॥ ८ ॥[b]

सन्त एव सतां नित्यमापत्तरणहेतवः ।
गजानां पङ्कलग्नानां गजा इव धुरन्धराः ॥ ९ ॥[c]

---

t. Vallabhadeva — u. Mahābhārata
a. Bhoja — b. Mahābhārata — c. Pañcatantra
१. रञ्जयितुं–$S_1$ २. °नि–$S_1$. ३. क्रु°– ४. °तैः–$S_1$ ५. °ज्ञता°–$S_1$



गुणः कृशोऽपि प्रथते पृथुरप्यपचीयते ।
प्राप्य साधुखलौ चन्द्रः पक्षाविव सितासितौ ॥ १० ॥

काकैः सह प्रवृद्धस्य कोकिलस्य कला गिरः ।
खलसङ्गेऽपि नैष्ठुर्यं कल्याणप्रकृतेः कुतः ॥ ११ ॥

मुक्तामृणालसुधियां निर्मलानां निसर्गतः ।
च्छिद्रं यदि स्याद[1]च्छिद्रं गुणैस्तदपि[2] धीयते ॥ १२ ॥

गुणिनो वृत्तविमलाः सौम्या मुक्तामयत्वतः ।
धार्यन्ते सादरं लोके हारा इव जनैर्हृदि ॥ १३ ॥

दर्शितोत्करदानानां भद्राणां स्तम्भमुज्झताम् ।
साधूनां सिन्धुराणां च पुरः स्तोत्रं न विद्यते ॥ १४ ॥

साधुसन्तानभाजो हि सन्तः संश्रितनन्दनाः ।
न ते मुञ्चन्ति पञ्चत्वेऽप्यौदार्यं स्वर्द्रुमा इव ॥ १५ ॥

कर्णलङ्घिगुणोत्कर्षास्त्यागिनो धनिनश्च ये ।
निष्फलान्न विमुञ्चन्ति मार्गणान् सङ्गरे स्थितान् ॥ १६ ॥

दुर्जनैश्च द्विरेफैश्च भ्राम्यद्भिः सुमनोगणः ।
आत्तगन्धोऽपि सहसा मार्दवं न विमुञ्चति ॥ १७ ॥

सरस्वत्यस्तु लक्ष्मीर्वा किं ताभ्यां दयया विना ।
जाते सुमनसां तापे विषादी दुर्लभः पुमान् ॥ १८ ॥

सुजनो न याति वैरं परहितबुद्धिर्विनाशकालेऽपि ।
छेदेऽपि चन्दनतरुः सुरभयति मुखं कुठारस्य ॥ १९ ॥

स्वल्पापि साधुसम्पद्भोज्या महतां न पृथ्व्यपि खलश्रीः ।
सारसमेव पयस्तृषमपनयति न यादसां पत्युः ॥ २० ॥[d]

रागिणि नलिने लक्ष्मीं दिवसो विदधाति दिनकरप्रभवाम् ।
अनवेक्षितगुणदोषः परोपकारः सतां व्यसनम् ॥ २१ ॥[e]

धिक् धिक् सज्जनमैत्रीं दुर्जनसंसर्ग एव नो भवतु ।
सज्जनवियोगकाले भवन्ति तीव्राणि दुःखानि ॥ २२ ॥[f]

---

d. Ravigupta — e. Bāṇa — f. Sundarapāṇḍya ?
१. °त°–$S_1$ २. °पनीयते–$S_1$.

पिबन्ति नद्यः स्वयमेव नाम्भः खादन्ति न स्वादुफलानि वृक्षाः ।
पयोधरो न क्वचिदत्ति सस्यं परोपकाराय सतां विभूतयः ॥ २३ ॥

भवन्ति नम्रास्तरवः फलोद्गमैर्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः स्वभाव एवैष परोपकारिणाम् ॥२४॥[g]

उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः ।
अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥२५॥[h]

नम्रत्वेनोन्नमन्तः परगुणनुतिभिः स्वान् गुणान् ख्यापयन्तः
पुष्णन्तः स्वीयमर्थं सततकृतमहारम्भयत्नाः परार्थे ।
क्षान्त्यैवाक्षेपरूक्षाक्षरपरुषगिरो दुर्जनान्दुःखयन्तः
सन्तश्चाश्चर्यचर्याः सदसि बहुमताः कस्य न स्युर्नमस्याः ॥ २६ ॥

## ॥ दुर्जनपद्धतिः ॥ २८ ॥

निर्माय खलजिह्वाग्रं सर्वप्राणहरं नृणाम् ।
चकार किं वृथा शस्त्रविषवह्नीन् प्रजापतिः ॥ १ ॥

वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः ।
श्वा भवत्युपघाताय लिहन्नपि दशन्नपि ॥ २ ॥[i]

दुर्जनः प्रकृतिं नैति सेव्यमानोऽपि नित्यशः ।
स्वेदनाभ्यञ्जनोपायैः श्वपुच्छमिव नामितम् ॥ ३ ॥

दुर्जनः सुजनीकर्तुं यत्नेनापि न शक्यते ।
अपानं मृत्सहस्रेण धौतं नास्यसमं भवेत् ॥ ४ ॥

श्रुतेनापि हृदिस्थेन खलो न स्यात्सुशीलवान् ।
मधुना कोटरस्थेन निम्बः किं मधुरायते ॥ ५ ॥

सहजान्ध्यदृशः स्वदुर्नये परदोषेक्षणदिव्यचक्षुषः ।
स्वगुणोच्चगिरो मुनिव्रताः परवर्णग्रहणेष्वसाधवः ॥ ६ ॥

पात्रमपात्रीकुरुते दहति गुणान् स्नेहमाशु नाशयति ।
अमले मलं नियच्छति दीपज्वालेव खलमैत्री ॥ ७ ॥

g. Pañcatantra h. Pañcatantra i. Pratāpa-Rudra

१. क्षान्त्योनाक्षेप°–$S_1$ २. °त्युपकाराय–$S_1$
३. °न्ध°–$S_1$ ४. गुण°–$S_1$ ५. विधत्ते–$S_1$



यथा गजः परिश्रान्तः छायामाश्रित्य विश्रमेत् ।
विश्रम्य च द्रुमं हन्यात्तथा नीचः स्वमाश्रयम् ॥ ८ ॥[j]

चारुता परदारेभ्यो धनं लोकोपतप्तये ।
प्रभुत्वं साधुनाशाय खले खलतरा गुणाः ॥ ९ ॥

कुर्वते स्वमुखेनैव बहुधान्यस्य खण्डनम् ।
नमः पतनशीलाय खलाय मुसलाय च ॥ १० ॥[k]

शक्यो वारयितुं जलेन दहनः छत्रेण सूर्यातपो
नागेन्द्रो निशिताङ्कुशेन समदो दण्डेन गोगर्दभाः ।
व्याधिर्भेषजमौषधैश्च विविधैर्मन्त्रप्रयोगैरहिः
सर्वस्यौषधमस्ति तत्र विहितं मूर्खस्य नास्त्यौषधम् ॥ ११ ॥

असतामुपभोगाय दुर्जनानां विभूतयः ।
पिचुमन्दः फलाढ्योऽपि काकैरेवोपभुज्यते ॥ १२ ॥

लब्धोदयः खलजनः प्रथमं स्वजने करोति परितापम् ।
उद्गच्छन्दववदहनो जन्मभुवं दारु निर्दहति ॥ १३ ॥

श्रुतिस्मृतिभ्यां सुजनो नियम्यते
परापवादेन च मध्यमो जनः ।
कषायसंसाधितशुष्कचर्मवत्
वधेन नीचः समुपैति मार्दवम् ॥ १४ ॥[l]

धूमः पयोधरपदं कथमप्यवाप्य
वर्षाम्बुभिः शमयति ज्वलनस्य तेजः ।
दैवादवाप्य कलुषप्रकृतिर्महत्त्वं
प्रायः स्वबन्धुजनमेव तिरस्करोति ॥ १५ ॥

वन्ध्यान्निन्दति दुःखितानुपहसत्याबाधते बान्धवान्
शूरान् द्वेष्टि धनच्युतानपहसत्युत्तापयत्याश्रितान् ।
गुह्यानि प्रकटीकरोति घटयत्यर्थेषु जीवाशयं
ब्रूते शीघ्रमवाच्यमुज्झति गुणान् गृह्णाति दोषान् खलः ॥ १६ ॥

अदाक्षिण्यादतीवोग्राः पवना इव दुर्जनाः ।
गुरूनपि प्रतिक्षेप्तुं समीहन्ते क्षमाभृतः ॥ १७ ॥

j. Someśvara k. Chapphala-deva l. Bhāravi

१. °रुते–$S_1$ २. तद्–$S_1$ ३. °शो°–$S_1$ ४. दारान्–$S_1$

द्विजेन्द्रो वा कलाढ्यो वा कामचारी भवेद्यदि ।
नित्यं निमज्जन्नप्यब्धौ नान्तःशुद्धो भवत्यलम् ॥ १८ ॥

जनित्वाप्युन्नते वंशे भ्रष्टाः केचन कण्टकाः ।
कुर्युर्जनपदक्लेशं साधुमार्गस्य दूषकाः ॥ १९ ॥

दुर्जनः सुजनीकर्तुं यत्नेनापि न शक्यते ।
संस्कारेणापि लशुनं कः सुगन्धीकरिष्यति ॥ २० ॥

खलानां कण्टकानां च द्विविधैव प्रतिक्रिया ।
उपानन्मुखभङ्गो वा दूरतो वा विसर्जनम् ॥ २१ ॥

अशनं कियदेव सम्भवे[1]द्धनदादप्यधिकायते खलः ।
अपि वेत्ति षडक्षराणि चेदुपदेष्टुं शितिकण्ठमिच्छति ॥ २२ ॥

## ॥ कलिपद्धतिः ॥ २९ ॥

कलेरन्ते भविष्यन्ति नररूपेण राक्षसाः ।
[2]मनुष्यान् भक्षयिष्यन्ति वित्ततो न शरीरतः ॥ १ ॥

निर्वीर्या पृथिवी निरौषधिरसा नीचा महत्त्वं गताः
राजानोऽर्थपरायणाः प्रतिदिनं विप्रा विकर्मस्थिताः ।
भार्या भर्तृषु बद्धवैरं[3]निरता पुत्राः पितुर्दूषकाः
इत्थंभूतमिदं जगत्कलियुगे धर्मो वनं प्रस्थितः ॥ २ ॥

## ॥ दम्भपद्धतिः ॥ ३० ॥

श्रुतदम्भः शमदम्भः स्नातकदम्भः समाधिदम्भश्च ।
निःस्पृहदम्भस्य तुलां यान्ति तु नैते शतांशस्य ॥ १ ॥

लोभः पितातिवृद्धो जननी माया सहोदरः कूटः ।
भ्रुकुटीरचना च विद्या पुत्रो दम्भस्य हुंकारः ॥ २ ॥[m]

[4]मृद्बिन्दुलाञ्छितललाटभुजोदरोरु-
कण्ठोष्ठपृष्ठचुबुकोरुकपोलजानुः ।
चूडाग्रकर्णकटिपाणिविराजमान-
दर्भाङ्कुरः स्फुरति मूर्त इवैष दम्भः ॥ ३ ॥[n]

---

m. Kalāvilāsa n. Prabodhacandrodaya, II. 6
१. °वे°–$S_1$ २. मानुषान्–$S_1$ ३. हृदयाः–S1 ४. दृग्बिन्दु°–M.



वाताहारतया जगीद्विषधरैराश्वास्य निःशेषितं
ते ग्रस्ताः पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः ।
तेऽपि क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ ४ ॥[o]

गङ्गातुङ्गतरङ्गशीतलशिलाविन्यस्तभास्वद्बृसी-
संविष्टाः कुशमुष्टिमण्डितमहादण्डाः करण्डोज्ज्वलाः ।
पर्यायग्रथिताक्षसूत्रवलयप्रत्येकबीजाग्रह-
व्यग्राग्राङ्गुलयो हरन्ति धनिनां वित्तान्यहो दाम्भिकाः ॥ ५ ॥[p]

वेश्यावेश्मनि शीधुगन्धललनावक्त्रासवामोदनैः
नीत्वा निर्भरमन्मथोत्सवरसैरुन्निद्रचण्डाः क्षपाः ।
सर्वज्ञा इति दीक्षिता इति चिरात्प्राप्ताग्निहोत्रा इति
ब्रह्मज्ञा इति तापसा इति दिवा धूर्तैर्जगद्वञ्च्यते ॥ ६ ॥[q]

नास्माकं जननी तथोज्ज्वलकुला सच्छ्रोत्रियाणां कुले
व्यूढा काचन कन्यका किल मया तेनास्मि ताताधिकः ।
अस्मत्स्यालकं[1]भागिनेयदयिता मिथ्याभिशस्ता तत-
स्तत्संपर्कवशान्मया स्वगृहिणी प्रेयस्यपि प्रोज्झिता ॥ ७ ॥

## ॥ कर्मप्रशंसापद्धतिः ॥ ३१ ॥

इह यत् क्रियते कर्म [2]परत्रैवोपभुज्यते ।
सिक्तमूलस्य वृक्षस्य फलं शाखासु दृश्यते ॥ १ ॥[r]

यथा छायातपौ नित्यं सुसंबद्धौ निरन्तरम् ।
तथा कर्म च कर्ता च संबद्धौ सर्वजन्तुषु ॥ २ ॥

अर्था गृहे निवर्तन्ते श्मशाने मित्रबान्धवाः ।
सुकृतं दुष्कृतं चैव गच्छन्तमनुगच्छति ॥ ३ ॥[s]

अदीर्घदर्शिभिर्मूढैः क्रूरैरैन्द्रियकैरपि ।
हसद्भिः क्रियते कर्म रुदद्भिरनुभूयते ॥ ४ ॥

---

o. Bhallaṭa p. Prabodhacandrodaya, II. 5
q. Prabodhacandrodaya, II. 1
r. Vyāsaśataka s. Mahābhārata
१. °मातृ मातुलसुता°–M २. °तत्परत्रो°–S.

यथा धेनुसहस्रेषु वत्सो विन्दति मातरम् ।
तथा पूर्वकृतं कर्म कर्तारमनुविन्दति ॥ ५ ॥

अचोद्यमानानि यथा पुष्पाणि च फलानि च ।
स्वं कालं नातिवर्तन्ते तथा कर्म पुरा कृतम् ॥ ६ ॥

यं यमिच्छेद्यथाकामं तं तमेव तथाप्नुयात्[१] ।
यदि न स्यात् पराधीनं पुरुषस्य क्रियाफलम् ॥ ७ ॥

न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
कर्मपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ८ ॥[t]

यः करोति नरः पापं न तस्यात्मा ध्रुवं प्रियः ।
आत्मनैव कृतं पापमात्मनैवोपभुज्यते ॥ ९ ॥

विपत्तौ किं विषादेन सम्पत्तौ च स्मयेन किम् ।
भवितव्यं भवत्येव कर्मणामीदृशं गतिः ॥ १० ॥

मनोऽनुकूलाः[२] प्रमदा रूपवत्यः स्वलंकृताः ।
वासः प्रासादपृष्ठेषु भवन्ति शुभकर्मणाम् ॥ ११ ॥

अन्यथा शास्त्रगर्भिण्या धिया धीरोऽर्थमीहते[३] ।
स्वामिवत्प्राक्तनं कर्म[४] विदधाति तदन्यथा ॥ १२ ॥

महच्च फलवैषम्यं दृश्यते कर्मसन्धिषु ।
वहन्ति शिबिकामन्ये यान्त्यन्ये शिबिकां गताः ॥ १३ ॥[u]

बहवः संप्रदृश्यन्ते तुल्यनक्षत्रसंभवाः ।
महच्च फलवैषम्यं दृश्यते कर्मसन्धिषु ॥ १४ ॥

शयानं चानुशयति तिष्ठन्तं चानुतिष्ठति ।
अनुधावति धावन्तं कर्म पूर्वकृतं नरम् ॥ १५ ॥

बहुशश्चाग्निसंक्रान्तं लोहं[५] शुचितमं यथा ।
बहुदुःखाभिसंतप्तस्तथात्मा शोध्यते बलात् ॥ १६ ॥[v]

वृद्धिं हानिं सुखं दुःखं सच्चासच्चाभयं भयं[६] ।
यौगपद्येन भुञ्जाना दृश्यन्ते कर्मसाक्षिणः ॥ १७ ॥

t. Vyasāśataka u. Viṣṇupurāṇa v. Mahābhārata

१. °दा°–M. २. रूपाः– M. ३. °क्ष°– $S_1$ ४. कर्म– $S_1$ ५. °भं°–M.
६. °ञ्च भयाभयम् M.



यो हि मोहाद्विषं पीत्वा नावगच्छति मानवः ।
परिणामे स वै मूढो जानीते कर्मणः फलम् ॥ १८ ॥

कस्य चिन्नहि[१] दुर्बुद्धेश्छन्दतो जायते मतिः ।
यादृशं कुरुते कर्म तादृशं फलमश्नुते ॥ १९ ॥

यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥ २० ॥

आजन्मनो विहितभक्तिरनन्यनाथः
सारथ्यकर्मणि च दक्षतया नियुक्तः ।
नाद्याप्यवापि चरणावरुणोऽपि सूर्या–
त्पुण्यैर्विना नहि भवन्ति समीहितानि ॥ २१ ॥

किं करोति नरः प्राज्ञः प्रेर्यमाणः स्वकर्मभिः ।
प्रागेव हि मनुष्याणां बुद्धिः कर्मानुसारिणी ॥ २२ ॥

प्राप्तव्यमर्थं लभते मनुष्यो
देवोऽपि तं लङ्घयितुं न शक्तः ।
तस्मान्न शोचामि न विस्मयो मे
यदस्मदीयं न हि तत्परेषाम् ॥ २३ ॥

नैवाकृतिः फलति नैव फलं न शीलं
विद्या न चापि न च यत्नकृतापि सेवा ।
भाग्यानि पूर्वतपसा खलु संचितानि
काले फलन्ति पुरुषस्य समीहितानि ॥ २४ ॥

अवश्यमनुभोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि ॥ २५ ॥

नमस्यामो देवान्ननु हतविधेस्तेऽपि वशगा
विधिर्वन्द्यः सोऽपि प्रतिनियतकर्मैकफलदः ।
फलं कर्मायत्तं यदि किमपरैः किंच विधिना
नमस्तत्कर्मभ्यो विधिरपि न येभ्यः प्रभवति ॥ २६ ॥

देवत्वमथ मानुष्यं पशुत्वं पक्षिता तथा ।
तिर्यक्त्वं स्थावरत्वं च याति जन्तुः स्वकर्मभिः ॥ २७ ॥

ब्रह्मा येन कुलालवन्नियमितो ब्रह्माण्डभाण्डोदरे
विष्णुर्येन दशावतारगहने क्षिप्तः सदा संकटे

१. कथं नु खलु– M.

रुद्रो येन कपालपाणिपुटके भिक्षाटनं कारितः
सूर्यो भ्राम्यति नित्यमेव गगने तस्मै नमः कर्मणे§॥ २८ ॥

## ॥ विधिप्रशंसापद्धतिः ॥ ३२ ॥

ब्रह्मणः स्तम्बभावं वा स्तम्बस्य ब्रह्मतामपि ।
स्वेच्छया विदधानस्य नाति भारः पिनाकिनः ॥ १ ॥[w]

गुणाः खलु गुणा एव न गुणाः फलहेतवः ।
अर्थसंचयकर्तॄणि भाग्यानि पृथगेव हि ॥ २ ॥

आत्मायत्ते गुणाधाने नैर्गुण्यं वचनीयता ।
दैवायत्तेषु वित्तेषु पुंसः का नाम वाच्यता ॥ ३ ॥

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ ४ ॥[x]

कर्तुमि[1]ष्टमनिष्टं वा कः प्रभुर्विधिना विना ।
कर्तारमन्यमारोप्य लोकस्तुष्यति कुप्यति ॥ ५ ॥[y]

साक्षान्मघवतः पौत्रः पुत्रो गाण्डीवधन्वनः ॥
स्वस्रीयो वासुदेवस्य तं गृध्राः पर्युपासते ॥ ६ ॥

न देवा यष्टिमादाय रक्षन्ति पशुपालवत् ।
यं हि रक्षितुमिच्छन्ति बुद्ध्या संयोजयन्ति तम् ॥ ७ ॥[z]

यो मे गर्भगतस्यापि वृत्तिं कल्पितवान् प्रभुः ।
शेषवृत्तिविधानाय स किं सुप्तोऽथवा मृतः ॥ ८ ॥

नीलकण्ठं समासाद्य वासुकिर्वायुभ[2]क्षणः ।
प्राप्यापि महतां स्थानं फलं भाग्यानुसारि यत् ॥ ९ ॥

अप्रार्थितानि दुःखानि यथैवायान्ति देहिनाम् ।
सुखान्यपि तथा मन्ये दैन्यमत्रातिरिच्यते ॥ १० ॥

---

§ Bhartṛhari.
w. Mahābhārata. x. Pañcatantra. y. Vallabhadeva.
z. Māhābhārata.
१. रिष्टमनिष्टं वा— २. °भोजनः— M.



आयुः कर्म च वित्तं च विद्या निधनमेव च ।
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिनः ॥ ११ ॥[a]

मनसापि यदस्पृष्टं दूरादपि यदुज्झितम् ।
तदप्युपायैर्विविधैर्विधिरिच्छन् प्रयच्छति ॥ १२ ॥[b]

तद्धनुस्तानि शस्त्राणि स रथस्ते च वाजिनः ।
सर्वमेकपदे नष्टं दानमश्रोत्रिये यथा ॥ १३ ॥

अन्नपानानि जीर्यन्ते यत्र भक्ष्याश्च भक्षिताः ।
तस्मिन्नेवोदरे गर्भे किं नाम न विजीर्यते ॥ १४ ॥[c]

न विधिं ग्रसति प्रज्ञा प्रज्ञां तु ग्रसते विधिः ।
विधिपर्यागतानर्थान् प्रज्ञया परिपश्यति ॥ १५ ॥

उपर्युपरि लोकस्य सर्वो भवितुमिच्छति ।
यतते च यथाशक्ति नच तद्वर्तते तथा ॥ १६ ॥

यथा वायोस्तृणाग्राणि वशं यान्ति बलीयसः ।
धातुरादेशमायान्ति तथा भूतानि भारत ॥ १७ ॥

शूरश्च बलवन्तश्च कृतास्त्राश्च न[2]रा रणे ।
कालाभिपन्ना सीदन्ति यथा [3]सैकतसेतवः ॥ १८ ॥[d]

नैवार्थेन न कामेन विक्रमेण न चाज्ञया ।
शक्या दैवगतिर्लोके निवर्तयितुमुद्यता ॥ १९ ॥

संप्रयोज्य वियोज्यापि कामकारकरः प्रभुः ।
क्रीडते भगवान् भूतैः बालः क्रीडनकैरिव ॥ २० ॥

अज्ञो जन्तुर[4]श्च नीचोऽयमात्मनः सुखदुःखयोः ।
ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ॥ २१ ॥

मणिः सूत्र इव प्रोतो नस्योत इव गोवृषः ।
धातुरादेशमन्वेति तन्मयो हि तदर्पणम् ॥ २२ ॥

वैद्याश्च व्याधिताः सन्ति बलवन्तश्च दुर्बलाः ।
श्रीमन्तश्चापरे षण्डा विचित्रो विधिपर्ययः ॥ २३ ॥

---

a. Pañcatanta2. b. Rudra c. Māhābhārata.
d. Mudrā-Rākṣasa
१. ° र्युं°– M. २. रणाजिरे M. ३. वालुक M.
४. °शरीरोऽ M.

पिबन्ति मधु पद्मेषु भृङ्गाः केसरधूसराः ।
हंसाः शैवालमश्नन्ति धिग्दैवमसमञ्जसम् ॥ २४ ॥

दैवमेव परं मन्ये पौरुषं तु निरर्थकम् ।
एकादशचमूभर्ता यदेकाकी वनं गतः ॥ २५ ॥

सन्ति पुत्राः सुबहवो दरिद्राणामनिच्छताम् ।
बहूनामिच्छतां नास्ति समृद्धानां विचेष्टताम् ॥ २६ ॥[e]

उत्पलस्यारविन्दस्य मत्स्यस्य कुमुदस्य च ।
एकयोनिप्रसूतानां तेषां रूपः पृथक् पृथक् ॥ २७ ॥[f]

प्राप्तव्यमेव प्राप्नोति गन्तव्यं चैव गच्छति ।
लब्धव्यं चैव लभते दुःखानि च सुखानि च ॥ २८ ॥[g]

सर्व एव महाभाग महत्त्वं प्रति सोद्यमाः ।
तथापि पुंसां भाग्यानि नोद्यमा बुद्धिहेतवः ॥ २९ ॥[h]

कश्च दैवेन सौमित्रे योद्धुमुत्सहते पुमान् ।
यस्य नु ग्रहणं किंचित्कर्मणोऽन्यत्र दृश्यते ॥ ३० ॥[i]

औदासीन्यं दयालूनामर्थिनां भाग्यहीनता ।
न हि स्वमुखवैरूप्यं दर्पणस्यापराधतः ॥ ३१ ॥

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ३२ ॥[j]

अलिरनुसरति परिमलं लक्ष्मीरनुसरति नयगुणसमृद्धिम् ॥
निम्नमनुसरति सलिलं विधिलिखितं बुद्धिरनुसरति ॥ ३३ ॥

प्रतिकूलतामुपगते हि विधौ विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्तुरभून्न पतिष्यतः करसहस्रमपि ॥ ३४ ॥[k]

रज्वा दिशः प्रवितताः सलिलं विषेण
खाता मही हुतभुजा ज्वलिता वनान्ताः ।
व्याधाः पदान्यनुसरन्ति गृहीतचापाः
कं देशमाश्रयतु यूथपतिर्मृगाणाम् ॥ ३५ ॥[l]

---

e. Mahābhārata f. PratāpaRudra. g. Mahābhārata. h. Rāmāyaṇa. i. Rāmāyaṇa. ( II 22, 21. ) j. Harṣa. k. Māgha l. Bhallaṭa.

१. °दृढा° M.. २. ख्याता M.



वाली यथा विनिहतः प्रथितप्रतापो
दग्धा यदेककपिना प्रसभं च लङ्का ।
तीर्णो यथा जलनिधी रघुसेतुना च
मन्ये यथाभिलषितं तु फलं विधातुः ॥ ३६ ॥

शशिदिवाकरयोरहिपीडनं
गजविहङ्गभुजङ्गमबन्धनम् ।
मतिमतां च समीक्ष्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ॥ ३७ ॥[m]

परीक्ष्य सत्कुलं शीलं विद्यां शौर्यं वयः शुभम् ।
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥ ३८ ॥[n]

न केवलं मनुष्येषु दैवं देवेष्वपि प्रभुः ।
सति मित्रे धनाध्यक्षे चर्मप्रावरणो हरः ॥ ३९ ॥

दाता बलिर्याचनको मुरारिर्दानं महावाजिमखश्च कालः ।
दातुः फलं बन्धनमेव जातं नमोऽस्तु दैवाय यथेष्टकर्त्रे ॥ ४० ॥

अरक्षितं तिष्ठति दैवरक्षितं सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः कृतप्रयत्नोऽपि गृहे विनश्यति ॥ ४१ ॥

रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजश्रीः ।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा मूलतः कमलिनीं गज उज्जहार ॥ ४२ ॥[o]

यत्रानेकः क्वचिदपि गृहे तत्र तिष्ठत्यथैको
यत्राप्येकस्तदनु बहवस्तत्र नैकोऽपि चान्ते ।
इत्थं नेयौ रजनिदिवसौ लोलयन्द्वाविवाक्षौ
कालः कल्यो भुवनफलके क्रीडति प्राणिशारैः ॥ ४३ ॥[o]

पौलस्त्यः स किमन्यदारहरणे दोषं न विज्ञातवान्
काकुत्स्थेन कथं न हैमहरिणस्यासंभवो लक्षितः ।
अक्षाणां न युधिष्ठिरेण महता दृष्टो विपाकः कथं
प्राज्ञानामपि दैववञ्चितधियां प्रायो मतिः क्षीयते ॥ ४४ ॥[p]

---

m. Bhartṛhari. n. Vallabhadeva o. Bhartṛhari. p. Suvarṇavistara.

श्रीर्देवी जनकात्मजा दशमुखस्यासीद् गृहे रक्षसो
नीता चैव रसातलं भगवती पूर्वं त्रयी दानवैः।
गन्धर्वस्य मदालसां च तनयां पातालकेतुश्छलाद्
दैत्येन्द्रोऽपि जहार हन्त विषमा वामा विधेर्वृत्तयः॥ ४५ ॥[q]

## ॥ दुर्विधिपद्धतिः ॥ ३३ ॥

अनागतविधाता च प्रत्युत्पन्नमतिश्च यः।
द्वाविमौ सुखमेधेते यद्भविष्यो विनश्यति ॥ १ ॥

सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः।
तदनु तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥ २ ॥[r]

खल्वाटो दिवसेश्वरस्य किरणैः सन्तापिते मस्तके
गच्छन्देशमनातपं द्रुतगतिस्तालस्य मूलं गतः।
तत्राप्यस्य महाफलेन पतता भग्नं सशब्दं शिरः
प्रायो गच्छति यत्र दैवहतकस्तत्रैव यान्त्यापदः ॥ ३ ॥[s]

अलङ्कारः शङ्काकरनरकपालं परिजनो
विशीर्णाङ्गो भृङ्गी वसु च वृष एको बहुवयाः।
अवस्थेयं स्थाणोरपि भवति सर्वामरगुरो-
र्विधौ वक्रे मूर्ध्नि स्थितवति वयं के पुनरमी ॥ ४ ॥[t]

## ॥ मृत्युपद्धतिः ॥ ३४ ॥

श्वः कार्यमद्य कुर्वीत पूर्वाह्णे चापराह्णिकम्।
नहि प्रतीक्षते मृत्युः कृतं वा[1] स्यान्न वाकृतं ॥ १ ॥[u]

यौवनस्थांश्च बालांश्च वृद्धान् गर्भगतानपि।
सर्वानाविशते मृत्युरेवंभूतमिदं जगत् ॥ २ ॥[v]

इदं कृतं[2]मिदं कार्यमिदमन्यत्कृताकृतम्।
एवमीहा[3]समायुक्तं कृतान्तः कुरुते वशे ॥ ३ ॥

q. Prabodhacandrodaya ( III 4.⁻)
r. Phalguhastinī. s. Pañcatantra. (Bhartṛhari).
t. Ruyyaka u. Mahābhārata.
१. वास्य न वा. $S_1$. २. कृत्य–$S_2$. ३ °क्षा°– $S_1$.



बलिनां दुर्बलानां च ह्रस्वानां महतामपि।
जरामृत्यू[1] हि भूतानां खादितारौ वृकाविव ॥ ४ ॥[w]

न कालो दण्डमुद्यम्य शिरः कृन्तति कस्यचित्।
कालस्य बलमेतावद् विपरीतार्थदर्शनम् ॥ ५ ॥

आघातं[2] नीयमानस्य वध्यस्येव पदे पदे।
आसन्नपदतां याति मृत्युर्जन्तोर्दिने दिने ॥ ६ ॥

मातुलो यस्य गोविन्दः पिता यस्य धनञ्जयः।
अभिमन्युर्वधं प्राप्तः कालो हि दुरतिक्रमः ॥ ७ ॥[x]

गुणिनां हीनविद्यानां श्रीमतां क्षीणसम्पदाम्।
कृतान्तपण्यशालायां समानः क्रयविक्रयः ॥ ८ ॥

तृष्णासूचिविनिर्भिन्नं सिक्तं विषयसर्पिषा।
रागद्वेषानले तप्तं मृत्युरश्नाति मानवम् ॥ ९ ॥

परिविष्टे महापात्रे प्राणिभोज्ये समन्ततः।
न ज्ञायते कथं[3] कालः कस्योपरि विधास्यति ॥ १० ॥

मस्तकस्थायिनं मृत्युं यदि पश्येदयं जनः।
आहारोऽपि न रोचेत किमुताकार्यकारिता ॥ ११ ॥[y]

मृत्युः शरीरगोप्तारं धनरक्षं वसुन्धरा।
असतीव हसत्यन्तः स्वपतिं पुत्रवत्सलम् ॥ १२ ॥

बीजं पिता क्षेत्रमिदं च माता
वृष्टिश्च कर्माणि शुभाशुभानि।
भूतानि सस्यप्रतिमानि लोके
जातानि जातानि लुनाति कालः ॥ १३ ॥

## ॥ धर्मसङ्करपद्धतिः ॥ ३५ ॥

स्वतो व्यवस्थाशून्यानां दशामिव मृगीदृशाम्।
न नियन्ता रुचेर्भर्ता यद्यासां को नियामकः ॥
अश्रुतेनास्मृतेनान्धः साधयत्यपथेन यः।
नीचोपसर्पणवशात्सम्पतेद्वंशवानपि ॥ १ ॥

v. Rāmāyaṇa. w. Vyāsaśataka.
x. Vyāsaśataka. y. Brahmāṇḍapurāṇa.
१. मृत्युर्हि— M. २. °खा°–M ३. करं°–$S_1$

स्थिरोन्नतिप्रमाणत्वाच्छाखाभिर्विततां द्विजाः (?)।
अवलम्ब्यागमान् कुर्युः कुलायं सुखमात्मनः ॥ २ ॥

विप्रः सुमनसो हित्वा भृङ्गवद्दानलिप्सया।
आश्रयन् नृपमातङ्गान् सीदेच्छ्रुतिनिषेधतः ॥ ३ ॥

भोगो यस्य सदा हेयः प्रियः स्यान्नित्यमस्थितः।
स सर्वमङ्गलोपेतोऽप्यवश्यं स्यादकिञ्चनः ॥ ४ ॥

यत्र स्मृतेऽपि नारीणां निर्वृतिं लभते मनः।
स दर्पकोपमानानां सीमा पुरुष उच्यते ॥ ५ ॥

कलत्रहरणक्लेशात् खिन्नानामात्मनस्तनौ।
धर्तुमुत्सुकता नेष्टः सुदृशां सुधियामिव ॥ ६ ॥

भुवनोत्तरकुल्यानां भोगेष्वव्यभिचारिणाम्।
के दाराणां प्रकृष्टानां न तृप्यन्ति कुटुम्बिनः ॥ ७ ॥

स्वे क्षेत्रभोगे प्रीतिर्या पर्यस्तकलमेखले।...
भूमिदेवाश्च देवाश्च नित्यमप्यमृताशनाः।
हीयन्ते स्वाधिकारात्ते ये सेवन्ते न वासवम् ॥ ८ ॥

वेदत्रयमयो यः स्यात् सोऽपि हीनः क्षणात् पतेत्।
स्वस्त्यैव...पीतायां वारुण्यां सत्पथाच्च्युतः ॥ ९ ॥

इनः स एव सेव्यो यः सालोकेन सुधामुचा।
द्विजेन्द्रमण्डलं क्षीणं समग्रयति संपदा ॥ १० ॥

अविवेकात्पीडयतां स्फीतमन्योन्यमण्डलम्।
कुचानां कुनृपाणां च पतनाय समुच्छ्रयः ॥ ११ ॥

बलिनापि विद्विषे पुंसे कम्पनीयेत चेद्भुवि।
महत्त्वं प्राप्य सोऽल्पोऽपि विक्रमेण श्रियं हरेत् ॥ १२ ॥

यस्य राज्ञो न वसुधा सेव्या सुमनसां गणैः।
ध्रुवं बहुलदोषोत्थः क्षयः स्यात्तस्य मण्डले ॥ १३ ॥

यो हीनस्य प्रतापेन राजा सम्परिभूयते।
स तु न क्षत्रगोष्ठीषु तेजस्वीति प्रतीयते ॥ १४ ॥

इति पूर्वपश्चिमसमुद्राधीश्वरारिरायविभालवीरश्रीकम्पराजमहाप्रधानि-भारद्वाजवंशमौक्तिकायमाणरत्नाकरसुधाकर-माधवकल्पतरुसहोदर-सायणार्यविरचिते सुभाषितसुधानिधौ धर्मपर्व समाप्तम् ॥

१. °य° राज° $S_1$. २. °म° $S_1$. ३. ह्री° $S_1$. क्षी $S_2$.
४ महती–$S_1$. ५ राज्ये–$S_1$.

# अर्थपर्व

## विषयप्रतिज्ञापद्धतिः ॥ १ ॥

लक्ष्मीसरस्वतीकीर्तिविलासविहृतिस्थलम्।
आचन्द्रतारकं जीयान्मन्त्री मायणसायणः ॥ १ ॥

लक्षणं भूमिपालस्य तत्प्रशंसाप्यसन्नृपः।
अराजकं राजविद्याप्याज्ञा वृद्धानुसेवनम् ॥ २ ॥

जयाजयाविन्द्रियाणां विनयाविनयावपि।
शक्तित्रयारिषड्वर्गसप्तव्यसनहर्षकाः ॥ ३ ॥

असूयासाहसौ मानप्रमादौ स्वापनिन्दनम्।
परीवादो राजवृत्तं दिनचर्या करग्रहः ॥ ४ ॥

आत्मरक्षा राज्यरक्षा तथा कण्टकशोधनम्।
लोकानुरञ्जनं कीर्तिरकीर्ती राजचाटवः ॥ ५ ॥

पुरोधा दुष्पुरोधाश्च द्वास्थौ वैद्यो भिषक्कविः।
कुकविः काव्यशंसा चाप्यन्तरङ्गस्य निन्दनम् ॥ ६ ॥

पुत्रापुत्रौ च सद्भ्राता दुर्भ्राता भृत्य एव च।
असद्भृत्यश्च विश्वास्योऽविश्वास्यः सूदनायकः ॥ ७ ॥

मन्त्र्यमन्त्री धियो मन्त्रप्रशंसा मन्त्रभूरपि।
मन्त्रकाल उपायाश्च सन्धिः सन्धेय एव च ॥ ८ ॥

असन्धेयः सन्धिनिन्दा दूतादूतौ चरस्तथा।
वैरविग्रहयानानि निमित्तमनिमित्तकम् ॥ ९ ॥

आसनं चाभियुक्तस्य प्रतीकारो द्विधाकृतिः।
समाश्रयो राजलिपिकारः कायस्थनिन्दनम् ॥ १० ॥

गायकः स्वर्णकृन्निन्दा पैशुन्यं चाधिकार्यपि।
दुष्टाधिकारी सन्मित्रममित्रः कोशसङ्ग्रहः ॥ ११ ॥

कोशहान्यर्थशंसार्थनिन्दा राष्ट्रगुणास्तथा।
दुर्गसेनान्यसेनानी रथसारथिवारणाः ॥ १२ ॥

१. °पुत्रावस°– $S_1$. २. °स°— $S_1$. ३ स्तथा –$S_1$.
४

अश्वः पदातिर्वीरौ च वीरवादस्तथा रणम् ।
कूटयुद्धं धीरभीरू मानी मानविहीनकाः ॥ १३ ॥

वीरपत्नीप्रलापश्चाभयदानं महान् लघुः ।
कृतघ्नोदारकृपणाः प्रशंसा निन्दनं श्रियः ॥ १४ ॥

राजसेवाप्रशंसा तन्निन्दा[1] दारिद्र्यदूषणम् ।
आशातृष्णार्थनासङ्गगुणदोषाः प्रकीर्तिताः ॥

सामान्यान्यापदेशौ च सङ्कीर्णं चार्थपर्वणि ॥ १५ ॥

## ॥ *राजलक्षणपद्धतिः ॥ २ ॥

पुत्रा इव पितुर्गेहे विषये यस्य मानवाः ।
निर्भया विचरिष्यन्ति[2] स राजा राजसत्तमः ॥ १ ॥

अगूढविभवा यस्य ( पु ? पौ ) रा राष्ट्रनिवासिनः ।
नयापनयवेत्ता यः स राजा राजसत्तमः ॥ २ ॥

यस्य वृत्तं नमस्यन्ति स्वर्गस्थस्यापि मानवाः ॥
पौरजानपदाः सर्वे स राजा राजसत्तमः ॥ ३ ॥

प्रजा यस्य विवर्धन्ते सरसीव महोत्पलम् ।
स राजा सर्वसुखदः स्वर्गलोके महीयते ॥ ४ ॥

## ॥ राजप्रशंसापद्धतिः ॥ ३ ॥

राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम् ।
राजन्यसति लोकस्य कुतो भार्या कुतो धनम् ॥ १ ॥

पर्जन्य इव भूतानामाधारः पृथिवीपतिः ।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥ २ ॥

यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे ।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥ ३ ॥

माता पिता गुरुः शास्ता वह्निर्वैश्रवणो यमः ।
सप्त राजगुणानेतान् मनुराह प्रजापतिः ॥ ४ ॥

---

* only from Saṅgraha

१ °निन्दा $S_1$.  २. °निवसिष्यन्ति–$S_2$.



एकस्य हि प्रसादेन कृत्स्नो लोकः प्रसीदति ।
व्याकुलेनाकुलः सर्वो भवतीति विनिश्चयम् ॥ ५ ॥

राजमूलो महाराज ! धर्मो लोकस्य रक्षते ।
प्रजा राजभयादेव न खादन्ति परस्परम् ॥ ६ ॥

पिता हि राजा लोकस्य प्रजानामनुकम्पिता ।
संभावयति मातेव दीनमभ्यवपद्यते ॥ ७ ॥

गुरुर्धर्मोपदेशेन शास्ता च परिपालनात् ।
दहत्यग्निरिवानिष्टान् दमयत्यहितांस्तथा ॥ ८ ॥

बालोऽपि नावमन्तव्यो राजापथ्यं[1] प्रतीच्छता ।
वह्निः स्फुलिङ्गमात्रोऽपि दहेद्ग्राममुपेक्षितः ॥ ९ ॥

बुद्धिशाखः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ।
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ १० ॥

अष्टानां लोकपालानां सम्भवत्यंशतो नृपः ।
तस्मादभिभवत्येषः सर्वभूतानि तेजसा ॥ ११ ॥[a]

बालोऽपि नावमन्तव्यो मनुष्य इति भूपतिः ।
महती देवता ह्येष नररूपेण तिष्ठति ॥ १२ ॥

तेजसा सह जातानां वयः कुत्रोपयुज्यते ।
बालस्यापि रवेः पादाः पतन्त्युपरि भूभृताम् ॥ १३ ॥

स्तवैर्नाक्षिप्यते धूर्तैर्हास्यैर्नाक्षिप्यते विटैः ।
छन्देन लङ्घ्यते भृत्यैर्भूभृन्मेरुरिवाचलः ॥ १४ ॥

आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः ॥ १५ ॥

द्विः शरं न तु सन्धत्ते द्विः स्थापयति नाश्रितान् ।
द्विर्ददाति न चार्थिभ्यो रामो द्विर्नाभिभाषते ॥ १६ ॥

राजास्य जगतो हेतुर्वृद्धेर्वृद्धाभिसम्पदः ।
नयनानन्दजननः शशाङ्क इव तोयधेः ॥ १७ ॥

---

१ °त्य°–S1.

a Manu

गोष्ठागारं कोशगृहं पुण्यश्लोकः पुरूरवाः ।
हस्तं दक्षिणमेवासौ ब्राह्मणानाममन्यत ॥ १८ ॥

निवासवृक्षः साधूनामापन्नानां परा गतिः ।
आर्तानां संश्रयश्चैव यशसश्चैकभाजनम् ॥ १९ ॥

प्रियवादी च भूतानां सत्यवादी च राघवः ।
बहुश्रुतानां वृद्धानां ब्राह्मणानामुपासिता ॥ २० ॥

अतिसाहसिकः श्रीमान् मन्त्रिणस्तं न्यरूपयन् ।
विनीतं गुरवो जिग्युर्धूर्तमन्तःपुराङ्गनाः ॥ २१ ॥

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्त इति घुष्यताम् ॥ २२ ॥[b]

तेनार्थवान् लोभपराङ्मुखेन
तेन घ्नता विघ्नमयं क्रियावान् ।
तेनास लोकः पितृमान् विनेत्रा
तेनैव शोकापनुदेन पुत्री ॥ २३ ॥[c]

कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥ २४ ॥

## ॥ असद्राजपद्धतिः ॥ ४ ॥*

उद्वेजनीयो भूतानां नृशंसः पापकर्मकृत् ।
त्रयाणामपि लोकानामीश्वरोऽपि न तिष्ठति ॥ १ ॥[d]

अघृष्टमिव माणिक्यममत्तमिव च द्विपम् ।
अशूरं पार्थिवं लोके जात्यमप्यवमन्यते ॥ २ ॥

प्रजा न रञ्जयेद्यस्तु राजा रक्षादिभिर्गुणैः ।
अजागलस्तनस्येव तस्य जन्म निरर्थकम् ॥ ३ ॥[e]

अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ।
यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ॥ ४ ॥[e]

b. Kālidāsa, Sākuntala.
c. Kālidāsa d. Rāmāyaṇa. e. Mahābhārata.
* Rajalakṣaṇa and Rajapraśaṁsā are missing in M,



भूभर्तु[1]र्भूषणं नास्ति प्रजानामिव रञ्जनम् ।
अन्यथापि नरस्येव किरीटग्रहणादिकम् ॥ ५ ॥

अनात्मवान्न[2]यद्वेषी वर्धयन्न[3]रिसम्पदम् ।
प्राप्यापि महदैश्वर्यं सह तेन विपद्यते ॥ ६ ॥[f]

राजोद्रिक्तः क्रियामूढो योऽतिक्रामति मन्त्रिणम् ।
अचिरात् तं वृथामन्त्रं[4] वशे कुर्वन्ति शात्रवम् ॥ ७ ॥

सर्वातिशङ्की नृपतिर्यश्च सर्वहरो भवेत् ।
स क्षिप्रमनृजुर्लुब्धः स्वजनेनैव बाध्यते ॥ ८ ॥

प्रसादो निष्फलो यस्य कोपश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥ ९ ॥

अयुक्तचारं दुर्दर्शमस्वाधीनं नराधिपम् ।
वर्जयन्ति नरा दूरान्नदीपङ्कमिव द्विपाः ॥ १० ॥

तीक्ष्णमल्पप्रदातारं प्रमत्तं गर्वितं शठम् ।
व्यसने सर्वभूतानि नाभिधावन्ति पार्थिवम् ॥ ११ ॥

प्रजापीडनसन्तापसमुद्भूतो हुताशनः ।
राज्ञः श्रियं कुलं प्राणान् नादग्ध्वा विनिवर्तते ॥ १२ ॥[g]

अदण्ड्यान्दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥ १३ ॥[h]

दुर्विनीते तु नृपतावकाले म्रियते जनः ।
राजदोषैर्विपद्यन्ते प्रजास्तै[5]रविधिपालिताः 3 ॥ १४ ॥[i]

भोगोत्कर्षादिवेगेन क्षयं यान्ति क्षितीश्वराः ।
दृष्टोऽतिहर्षाद्वृष्णीनां तृणाद्रुधसमुद्भवः ॥ १५ ॥[j]

तदेतत्काकतालीयं तदेतच्च घुणाक्षरम् ।
यदपथ्यभुजामायुर्यदनीतिमतां श्रियः ॥ १६ ॥[k]

(१) भू भृ द्ध°- M (२) °नय-MS (३) °ति° M.
(४) °मन्त्रावेशे M. (५) °स्तु विधि°-M
f. Kāmandaka. g. Mahābhārata.
h. Manu. i. Rāmāyaṇa.
j. Harivaṁśa. k. Śṛṅgāra-Prakāśa.

व्यालाः[1] सुखेन सेव्यन्ते वातोद्धूताश्च वह्नयः ।
न तु नित्यमदाध्माता राजानः कुटिलाशयाः ॥ १७ ॥[l]

उच्छास्त्रं पदविन्यासः[2] सहसैव समापतन् ।
नृपः शत्रुमुखग्रासमगत्वा न निवर्तते ॥ १८ ॥[m]

यः कोशमेव पुष्णाति त्यागभोगपराङ्मुखः ।
केवलं राज्यवाणिज्यं स करोति नराधिपः ॥ १९ ॥

व्यसनैरेवाघ्राता शृण्वन्ति वचांसि पापमित्राणाम्[3] ।
उद्धूतारिष्टेभ्यो ह्यपथ्यमेवाधिकं स्वदते ॥ २० ॥

अव्यवसायिनमलसं दैवपरं पुरुषकारपरिहीणम् ।
वृद्धमिव पतिं कन्या नेच्छत्युपगूहितुं लक्ष्मीः ॥ २१ ॥

सदनुशासनमाश्रितभरणं च राजचिह्नानि ॥
अभिषेकपट्टबन्धौ वालव्यजनं व्रणस्यापि ॥ २२ ॥

अहिते हितबुद्धिरल्पधीरवमन्येत मतानि मन्त्रिणाम् ।
चपलं सहसैव सम्पतन्नरिखड्गान्निहतः पतत्यधः ॥ २३ ॥

शक्तिरर्थपतिषु स्वयंग्रहं प्रेम कारयति वा निरत्ययम् ।
कारणद्वयमिदं निरस्यतः प्रार्थनाधिकबले विपत्फला ॥ २४ ॥

न नटा न विटा न गायका न च सभ्येतरवादचुञ्चवः ।
नृपमीक्षितुमत्र के वयं स्तनभारानमिता न योषितः ॥ २५ ॥[n]

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात् समाक्षिपति जीवितमप्यकाण्डे
कष्टो मनोभव इवेश्वरदुर्विदग्धः ॥ २६ ॥[o]

नृपः कामासक्तो न गणयति धर्मं न च हितं
यथेष्टं स्वच्छन्दः प्रतिचरति मत्तो गज इव ।
ततो मानाध्मातः पतति स यदा शोकगहने
तदा भृत्ये दोषान् क्षिपति न निजं वेत्त्यविनयम् ॥ २७ ॥[p]

l. Bṛhatkathā   m. Kāmandaka.
n. Bhartṛhari.   o. Harṣacarita   p. ( SBhg. ) Pañcatantra
( १ ) °मः-M   ( २ ) °व°-M.   ( ३ ) वापि.-M.



रक्षां न क्षमते क्षिपत्यपि करं शिक्षागुणैः क्षुभ्यति
प्रद्वेष्टि स्वजनं त्यजत्यपि नयं मृद्नाति मार्गस्थितम् ।
भूतिं नेच्छति यच्छति प्रतिभयं दुर्वर्त्मना गच्छति
क्रूराग्रं विनयाङ्कुशं न सहते भूपालमत्तद्विपः ॥ २८ ॥

स्वैरं मदानलज्वालादुष्प्रेक्षः परुषं रटन् ।
उत्पाताभ्रवदाशानां निरोधाय दुरीश्वरः ॥ २९ ॥

भिक्षाशनो विषादी च यस्य स्याद्धनिनः सखा ।
तस्य किंपुरुषाः कुर्युरपदानस्य कीर्तनम् ॥ ३० ॥

न तमुग्रं प्रभुं प्राप्य विश्वस्य रतिरुल्लसेत् ।
येन कामोऽपि हन्येत भूरिस्नेहेन चक्षुषा ॥ ३१ ॥

स्तब्धस्य नश्यति यशो विषमस्य मित्रं
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रसन्नसचिवस्य नराधिपस्य ॥ ३२ ॥

अवज्ञानाद्राज्ञो भवति मतिहीनः परिजन-
स्ततः स्वप्राधान्याद् व्रजति न समीपं बुधजनः ।
बुधैस्त्यक्ते राज्ये भवति नहि नीतिर्गुणवती
विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥ ३३ ॥

## ॥ अराजकपद्धतिः ॥ ५ ॥

राजा चेन्न भवेल्लोके पृथिव्यां दण्डधारकः ।
शूले मत्स्यानिवाधक्ष्यद् दुर्बलान् बलवत्तरः ॥ १ ॥

अराजकेषु दुष्टेषु धर्मो नह्यवतिष्ठते ।
परस्परं च बाधन्ते सर्वथा धिगराजकम् ॥ २ ॥[q]

नाराजके जनपदे विद्युन्माली महास्वनः ।
अभिवर्षति पर्जन्यो महीं दिव्येन वारिणा ॥ ३ ॥

विप्रोषितकुमारं तद्राज्यमस्तामितेश्वरम् ।
रन्ध्रान्वेषणदक्षाणां द्विषामामिषतां ययौ ॥ ४ ॥

q. Manu

राज्ञा शून्या कुमारैश्च चोरभोग्याभवन्मही ।
केवलासुरभोग्यैव सन्ध्या चन्द्रार्कवर्जिता ॥ ५ ॥

नाराजके जनपदे स्वकं भवति कस्यचित् ।
नाराजके जनपदे बीजमुष्टिः प्रकीर्यते ॥ ६ ॥

यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥ ७ ॥[r]

यः स्यादराजको लोकश्चक्षुष्मानपि सोऽन्धकः ।
तं विना यन्न शक्नोति कृत्याकृत्यनिरीक्षणम् ॥ ८ ॥

सिंहशून्यमिवारण्यं चन्द्रशून्यमिवाम्बरम् ।
अर्कशून्यमिवाहः स्याद्राजशून्यं महीतलम् ॥ ९ ॥[s]

आज्ञा तेजः पार्थिवानां सा च वाचि प्रतिष्ठिता ।
यच्च ब्रूयुरसत्सद्वा स धर्मो व्यवहारिणाम् ॥ १० ॥

## ॥ राजविद्यापद्धतिः ॥ ६ ॥

आन्वीक्षिकीं त्रयीं वार्तां दण्डनीतिं च पार्थिवः ।
तद्विद्यैस्तत्क्रियोपेतैश्चिन्तयेद्विनयान्वितः ॥ १ ॥

आन्वीक्षिक्यात्मविज्ञानं धर्माधर्मौ त्रयीस्थितौ ।
अर्थानर्थौ तु वार्तायां दण्डनीत्यां नयानयौ ॥ २ ॥[t]

## ॥ आज्ञापद्धतिः ॥ ७ ॥

एतदर्थं हि राजानः प्रशंसन्ति वसुन्धराम् ।
यदेषां सर्वकृत्येषु मनो न प्रतिहन्यते ॥ १ ॥[u]

राजा रजतसूपेन न भुङ्क्ते कनकौदनम् ।
आज्ञासिद्धिरसिद्धा चेत् किं फलं नृपजन्मनः ॥ २ ॥[v]

r. Rāmāyaṇa. s. Cākṣuṣīya. t. Kāmandaka.
u. Rāmāyaṇa. v. Bhāravi.
(१) °म°–M.



*न तेन सज्यं क्वचिदुद्यतं धनुः
कृतं न वा कोपविजिह्ममाननम् ।
गुणानुरागेण शिरोभिरुह्यते
नराधिपैर्माल्यमिवास्य शासनम् ॥ ३ ॥[w]

## ॥ वृद्धसेवापद्धतिः ॥ ८ ॥

स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः[1] सुखानि च ।
गुरुवृत्त्यनुरोधेन न किञ्चिदपि दुर्लभम् ॥ १ ॥

स्वाधीनं समतिक्रम्य मातरं पितरं गुरुम् ।
अस्वाधीनं कथं दैवं प्रकारैरनुराध्यते ॥ २ ॥

तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा
यत् संवाहयतः सुखं हि चरणौ तातस्य किं राजके ।
किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-
रायासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुणः ॥ ३ ॥[x]

## ॥ जितेन्द्रियपद्धतिः ॥ ९ ॥

प्रकीर्णे विषयारण्ये धावन्तं विप्रमाथिनम् ।
ज्ञानाङ्कुशेन कुर्वीत वश्यमिन्द्रियदन्तिनम् ॥ १ ॥[y]

लोकाधाराः श्रियो राज्ञां दुरापा दुष्परिग्रहाः ।
तिष्ठन्त्याप इवाधारे चिरमात्मनि संस्कृते[2] ॥ २ ॥

शब्दः स्पर्शश्च रूपं च रसो गन्धश्च पञ्चमः ।
एकैकमलमेतेषां विनाशप्रतिपत्तये[3] ॥ ३ ॥

[4]यथाम्भसि प्रसन्ने तु रूपं पश्यति चक्षुषा ।
तद्वत् प्रसन्नेन्द्रियवान् ज्ञेयं ज्ञानेन पश्यति ॥ ४ ॥

* 5th verse in अराजकपद्धति of $S_1$.

※ Lacuna in M.

w. Bhāravi x. Nāgānanda. y. Kāmandaka
(१) धनानि–$S_1$. (२) °सि°ि M. (३) °बुद्धये–M. (४) हृदा°–M.

जीयन्तां दुर्जया एव रिपवश्चक्षुरादयः ।
जितेषु ननु लोकोऽयं तेषु कृत्स्नतया जितः ॥ ५ ॥[z]

अजितेन्द्रियवर्गस्य नाचारेण भवेत् फलम् ।
केवलं देहखेदाय दुर्भगस्य विभूषणम् ॥ ६ ॥

तस्य राज्ञः स्थिरैव श्रीर्यदि स्यान्नियतेन्द्रियः ।
गजस्नानमिवाचारस्तस्य यो ह्यजितेन्द्रियः ॥ ७ ॥[a]

राज्ञां मदद्विपो नेयः शमालाननिलीनताम् ।
शमितः शौरिणा बाणदर्पाग्नि[1]श्चक्रधारया ॥ ८ ॥[b]

गिरीन्द्रशिखराकारो लीलयोन्मूलितद्रुमः ।
करिणीस्पर्शस[2]म्मोहादालानं याति वारणः ॥ ९ ॥

गन्धलुब्धो मधुकरो दानासवपिपासया ।
अभ्येत्य सुखसंचारां गजकर्णझलज्झलाम् ॥ १० ॥[c]

स्निग्धदीपशिखालोकविलो[3]भितविलोचनः ।
मृत्युमृच्छत्यसन्देहात् पतङ्गः सहसा प[4]तन् ॥ ११ ॥

दूरेऽपि हि भवन् दृष्टेरगाधे सलिले पतन् ।
मीनस्तु सामिषं लोहमास्वादयति मृत्यवे ॥ १२ ॥[c]

इन्द्रियाण्येव तत्सर्वं यत्स्वर्गनरकावुभौ ।
निगृहीतौ[5]विसृष्टानि स्वर्गाय नरकाय च ॥ १३ ॥[d]

कुमुदान्येव शशाङ्कः सविता बोधयति पङ्कजान्येव ।
वशिनां हि परपरिग्रह[6]संश्लेषपराङ्मुखी वृत्तिः ॥ १४ ॥[e]

रथः शरीरं पुरुषस्य दृष्टं
आत्मा नियन्तेन्द्रियाण्याहुरश्वाः ॥
तैरप्रमत्तः कुशलः सदश्वै-
र्दान्तैः कृती याति पदं स धीरः ॥ १५ ॥

z. Kámandaka. a. Rājaga. b. Cākṣuṣīya
c. Kāmandaka. d. Mahābhārata. e. Sākuntala.
(१) °शत°–M. (२) °योगा°–M. (३) °हि°–M.
(४) चरन्–M (५) °ति–$S_2$; °तै° $S_1$. (६) °सन्तोष°–$S_1$



शुचिर्बालतृणाहारो विदूरक्रमणक्षमः ।
लुब्धकाद् गीतलोभेन मृगो मृगयते वधम् ॥ १६ ॥

कुरङ्गमातङ्गपतङ्गमीनभृङ्गा हताः पञ्चभिरेव पञ्च ।
एकः प्रमाथी स कथं न वध्यो यस्यां हताः पञ्चभिरेव पञ्च ॥ १७ ॥[f]

क्व चिराय परिग्रहः श्रियां
क्व च दुष्टेन्द्रियवाजिवश्यता ।
शरदभ्रचलाश्चलेन्द्रियै-
रसुरक्ष्या हि बहुच्छलाः श्रियः ॥ १८ ॥[g]

अनित्याः शत्रवो बाह्या विप्रकृष्टाश्च ते यतः ।
अतः सोऽभ्यन्तरान्नित्यं षड्रिपूनजयद्रिपून् ॥ १९ ॥

अरिषड्वर्ग एवायमस्यास्तानि पदानि षट् ।
तेषामेकमपि च्छिन्दन् च्छिन्द्येय भ्रमरीश्रियम् ॥ २० ॥

## ॥ अजितेन्द्रियपद्धतिः ॥ १० ॥

यो जितः पञ्चवर्गेण सहजेनात्मकर्शिना ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ १ ॥

पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥ २ ॥

अ[1]र्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद् भ्रश्यते हि सः ॥ ३ ॥[h]

धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणराज्यलाभेभ्यः क्षिप्रं स परिहीयते ॥ ४ ॥

एकस्यापि न यः शक्तो मनसः संनिबर्हणे ।
महीं सागरपर्यन्तां स कथं विजिगीषते ॥ ५ ॥[i]

दुरासदानरीनुग्रान् धृतेर्विश्वासजन्मनः ।
भोगान् भोगानिवाहेयानध्यास्यापन्न दुर्लभा ॥ ६ ॥[j]

f. Mahābhārata. g. Bhāravi.
h. Mahābhārata. i. Kāmandaka. j. Bhāravi.
(१) °र्थि°—M.

अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैः प्रसृतो बालः सुदुःखं मन्यते सुखम् ॥ ७ ॥

अविजित्य य आत्मानममात्यान् विजिगीषते ।
अजितात्मा जितामात्यः सोऽवशः परिहीयते ॥ ८ ॥

कामः क्रोधश्च लोभश्च मोहो हर्षो मदस्तथा ।
षड्वर्गमुत्सृजेदेनं यस्मिंस्त्यक्ते सुखी नृपः[1] ॥ ९ ॥

दाण्डक्यो नृपतिः कामात् क्रोधाच्च जनमेजयः ।
लोभादैलस्तु राजर्षिर्वातापिर्हर्षतोऽसुरः ॥ १० ॥

पौलस्त्यो राक्षसो मानान्मदाद्दम्भोद्भवो नृपः ।
प्रयाता निधनं ह्येते शत्रुषड्वर्गमाश्रिताः ॥ ११ ॥[k]

सप्त दोषाः सदा राज्ञा हातव्या विजिगीषुणा ।
प्रायशो यैर्विनश्यन्ति दृढमूलाश्च पार्थिवाः ॥ १२ ॥

## ॥ विनयपद्धतिः ॥ ११ ॥

नयस्य विनयो मूलं विनयः शास्त्रनिश्चयः ।
विनयो हीन्द्रियजयस्तद्युक्तः शास्त्रमृच्छति ॥ १ ॥[k]

आत्मानं प्रथमं राजा विनयेनोपपादयेत् ।
ततोऽमात्यांस्ततः पुत्रान् ततो भृत्यांस्ततः प्रजाः ॥ २ ॥[k]

इयं हि लोकव्यतिरेकवर्तिनी
स्वभावतः पार्थिवता समुद्धता ।
बलात्तदेनां विनयेन योजयेत्
नयस्य वृद्धौ विनयः पुरःसरः ॥ ३ ॥[k]

शास्त्राय गुरुसंयोगः शास्त्रं विनयवृद्धये ।
विद्याविनीतो नृपतिर्न कृच्छ्रेष्ववसीदति ॥ ४ ॥[k]

---

k. Kāmandaka.
( १ ) °मनात्म° M. ( २ ) सर्वेशः–M. ( ३ ) गा°–M. ( ४ ) °न्न°–



परां विनीतः समुपैति सेव्यतां
महीपतीनां विनयो विभूषणम् ।
प्रवृत्तदानो मृदुसञ्चरत्करः
करीव भद्रो विनयेन शोभते ॥ ५ ॥[l]

जितेन्द्रियत्वं विनयस्य कारणं
गुणप्रकर्षो विनयादवाप्यते ।
गुणाधिके पुंसि जनोऽनुरज्यते
जनानुरागप्रभवा हि सम्पदः ॥ ६ ॥[m]

पभवः खलु कोशदण्डयोः
कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां
नियतिं लोक इवानुरुध्यते ॥ ७ ॥[m]

## ॥ अविनयपद्धतिः ॥ १२ ॥

अविनयरतमादरादृते वशमवशं हि नयन्ति शत्रवः ।
श्रुतविनयनिधिं समाश्रितस्तनुरपि नैति पराभवं क्वचित् ॥ १ ॥[n]

## ॥ उत्साहपद्धतिः ॥ १३ ॥

उत्साहो बलवान्न्याय्यो नास्त्युत्साहात्परं बलम् ।
उत्साहारम्भमात्रेण जायन्ते सर्वसम्पदः ॥ १ ॥[o]

योजनानां सहस्रं तु शनैर्याति पिपीलिका ।
अगच्छन्वैनतेयोऽपि पदमेकं न गच्छति ॥ २ ॥

लघीयः प्राज्यं वा फलमभिमुखं यातु मनसा
निरीहेण स्थातुं क्वचिदपि न युक्तं मतिमता ।
कुलालो दण्डेन भ्रमयति न चेच्चक्रमनिशं
शरावः कुम्भो वा न हि भवति सत्यामपि मृदि ॥ ३ ॥

---

l. Kāmandaka m. Bhāravi n. Kāmandaka.
o. Rāmāyaṇa.
( १ ) °ष°–M. ( २ ) °क्षि°–S1

यस्य स्यादुद्यमे चित्तं नित्यमुत्साहसंमितम् ।
उत्साहशक्तिः सा ज्ञेया नृपाणां भूतिमिच्छताम् ॥ ४ ॥[p]

## ॥ प्रभुशक्तिपद्धतिः ॥ १४ ॥

आज्ञारूपेण या शक्तिः सर्वेषां मूर्धनि स्थिता ।
प्रभुशक्तिर्हि सा ज्ञेया प्रभावमहितोदया ॥ १ ॥[p]

## ॥ मन्त्रपद्धतिः ॥ १५ ॥

कामक्रोधभयादन्यैर्लोभ्यमानो न लुभ्यति ।
यया शक्त्या युतः कार्ये मन्त्रशक्तिस्तु सा स्मृता ॥ १ ॥[p]

प्रभावोत्साहशक्तिभ्यां मन्त्रशक्तिस्तु शस्यते ।
प्रभावोत्साहवान् काव्यो जितो देवपुरोधसा ॥ २ ॥[q]

## ॥ कामजयपद्धतिः ॥ १६ ॥

न हि कामात्मना राज्ञा सततं शठबुद्धिना ।
नृशंसेनातिलुब्धेन शक्यं पालयितुं प्रजाः ॥ १ ॥

कामा मनुष्यान् प्रदहन्त एव
धर्मस्य ये विघ्नकरा नरेन्द्र ।
पूर्वं नरस्तान्मतिमान् विनिघ्नन्
लोके प्रशंसां लभतेऽनवद्याम् ॥ २ ॥

## ॥ क्रोधप्रशंसापद्धतिः ॥ १७ ॥

चापमानय सौमित्रे शरांश्चाशीविषोपमान् ।
सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवङ्गमाः ॥ १ ॥[r]

न स सङ्कुचितः पन्थाः येन वाली हतो गतः ।
समये तिष्ठ सुग्रीव मा वालिपथमन्वगाः ॥ २ ॥[r]

* From Avinaya Paddhati fo Kāmajaya Paddhati found only in Saṅgraha.

p. Manu q. Kāmandaka. r. Rāmāyaṇa.

( १ ) शक्याः–S[1]



उदाहरणमाशीःषु प्रथमे ते मनस्विनाम् ।
शुष्केऽशनिरिवामर्षो यैररातिषु पात्यते ॥ ३ ॥[s]

क्रोधं प्रभो संहर संहरेति
यावद् गिरः खे मरुतां चरन्ति ।
तावद् स वह्निर्भवनेत्रजन्मा
भस्मावशेषं मदनं चकार ॥ ४ ॥[t]

मथ्नामि कौरवशतं समरे न कोपाद्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन ॥ ५ ॥[u]

श्रुतमनुमतं दृष्टं वा यैरिदं गुरुपातकं
मनुजपशुभिर्निर्मर्यादैर्भवद्भिरुदायुधैः ।
नरकरिपुणा सार्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्मेदोमांसैः करोमि दिशां बलिम् ॥ ६ ॥[u]

यो यः शस्त्रं बिभर्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमपि जगतामन्तकस्यान्तकोऽहम् ॥ ७ ॥[u]

## ॥ क्रोधनिन्दापद्धतिः ॥ १८ ॥

न कश्चिच्चण्डकोपानामात्मीयो नाम भूभुजाम् ।
होतारमपि जुह्वन्तं स्पृष्टो दहति पावकः ॥ १ ॥[v]

क्रुद्धः पापं[3] न कुर्यात् कः क्रुद्धो हन्याद्गुरूनपि ।
क्रुद्धः परुषया वाचा नरः साधूनधिक्षिपेत् ॥ २ ॥

नावाच्यमस्ति क्रुद्धस्य नाकार्यं विद्यते तथा ।
वाच्यावाच्यं प्रकुपितो न[3] विजानाति कर्हिचित् ॥ ३ ॥[w]

s. Bhāravi.. t. Kālidāsa. u. Bhaṭṭa Nārāyaṇa.
v. Vallabhadeva w. Rāmāyaṇa

( १ ) °रेण°–M. ( २ ) °ति° ( ३ ) पापानि कुरुते–M. ( ४ ) नाव–M.

हिंस्यात् क्रोधादवध्यांश्च वध्यान् संपूजयेदपि ।
आत्मानमपि वा क्रुद्धः प्रेषयेद्यमसादनम् ॥ ४ ॥

सामवादाः सकोपस्य तस्य प्रत्युत दीपकाः ।
प्रतप्तस्येव सहसा सर्पिषस्तोयबिन्दवः ॥ ५ ॥

अविधेये जने पुंसां कोपः किमिति कारणम् ।
विधेयेऽपि च कः कोपस्तन्निवेशितजीवने ॥ ६ ॥[x]

न पूतो न तपस्वी च न यज्वा न च धर्मभाक् ।
क्रोधस्य यो वशं गच्छेत्तस्य लोकद्वयं न हि ॥ ७ ॥

यः समुत्पतितं क्रोधं दैन्यं वा न नियच्छति ।
नश्यते स श्रियं प्राप्य पात्रमाममिवाम्भसि ॥ ८ ॥

पुत्रो भृत्यः सुहृन्मित्रं भार्या धर्मश्च सत्यता ।
तस्यैतानपयास्यन्ति क्रोधशीलस्य निश्चितम् ॥ ९ ॥

अपकारिणि कोपश्चेत् कोपे कोपः कथं न जायेत ।
धर्मार्थकाममोक्षप्राणयशोहारिणि क्रूरे ॥ १० ॥[y]

निर्दहति कुलमशेषं जातीनां वैरसम्भवः कोपः ।
नवमिव घनपवनाहततरुचयसंघट्टसम्भवो दहनः ॥ ११ ॥

यत् क्रोधनो यजते यद्ददाति
यद्वा तपस्तप्यते[1] यज्जुहोति ।
वैरोचनिर्यस्तद्धरते च सर्वं
मोघः श्रमो भवति क्रोधनस्य ॥ १२ ॥[z]

बलवानपि कोपजन्मनस्तमसो नाभिभवं रुणद्धि यः ।
क्षयपक्ष इवैन्दवीः कलाः सकला हन्ति स शक्तिसम्पदः ॥ १३ ॥[a]

अपनेयमुदेतुमिच्छता तिमिरं रोषमयं धिया पुरः ।
अविभिद्य निशाकृतं तमः प्रभया नांशुमताप्युदीयते ॥ १४ ॥[a]

x. Vallabhadeva. y. Sundarapāṇḍya. z. Mahābhārata.
a. Bhāravi.
(१) ° ति °–M.



अन्धीकरोमि भुवनं बधिरीकरोमि
धीरं सचेतनमचेतनतां नयामि ।
कृत्यं न पश्यति न येन हितं शृणोति
धीमानधीतमपि न प्रतिसंन्दधाति[b] ॥ १५ ॥

काष्ठाद्यथाग्निरुत्पन्नं स्वाश्रयं दहति क्षणात् ।
क्रोधाग्निर्देहजस्तद्वत्तमेव दहति ध्रुवम् ॥ १६ ॥

तिरस्कुर्वन्ति कृतिनस्तापयन्ति तपस्विनः ।
आत्मानमपि हिंसन्ति क्रोधान्धाः किमतः परम् ॥ १७ ॥

हीयते न प्रदीपेन क्षीयते नैव वह्निना ।
नाश्यते रविणा नापि क्रोधरूपं तमो महत् ॥ १८ ॥

पुष्यद्दुर्गतिपातभीत इव यं कृत्वा स्वयं वेपते
यद्भीतैरिव मांसशोणितरसैः कायः परित्यज्यते ।
स्थानं दुःखगणस्य निर्मलगुणं म्लान्येकहेतुर्मम
क्षान्त्या हन्त विलक्षयान्निजरिपुः क्रोधो हठान्नीयताम् ॥ १९ ॥

फलितकलितश्रेयःश्रेणीप्रसूनपरम्परः
प्रशमपयसा सिक्तो मुक्तिं तपश्चरणद्रुमः ।
यदि पुनरसौ प्रत्यासत्तिं प्रकोपहविर्भुजो
भजति लभते भस्मीभावं कुतश्च फलोदयः ॥ २० ॥

सन्तापं तनुते भिनत्ति हृदयं सौहार्दमुत्सादय–
त्युद्वेगं जनयत्यवद्यवचनं सूते विवर्द्धे कलिम् ।
कीर्तिं कृन्तति दुर्मतिं वितरति व्याहन्ति पुण्योदयं
धत्ते यः कुमतिं स हातुमुचितो रोषः सदोषः सताम् ॥ २१ ॥

यत्क्रोधयुक्तो जपति यज्जुहोति यदर्चति ।
सर्वं हरति तत्तस्य भिन्नकुम्भादिवोदकम् ॥ २२ ॥

प्रयत्नेन तपस्तप्तं नृणां वर्षशतैरपि ।
क्रोधो हरति तत् सर्वमतः क्रोधं न संश्रयेत् ॥ २३ ॥

कामक्रोधावनिर्जित्य किमरण्ये करिष्यति ।
अथवा निर्जितावेतौ किमरण्ये करिष्यति ॥ २४ ॥

b. Prabodhacandrodaya.

## ॥ लोभपद्धतिः ॥ १९ ॥

मनः सङ्कल्पवीर्येण कामेन विषयेषुभिः ।
विद्धः पतति लोभाग्नौ ज्योतिर्लोभात् पतङ्गवत् ॥ १ ॥

अक्षमा श्रीपरित्यागः [१]ह्रीनाशोऽथ धनक्षयः ।
अभिध्याताज्ञता चैव सर्वं लोभात् प्रवर्तते ॥ २ ॥

न हि पूरयितुं शक्यः लोभः प्रीत्या कथञ्चन ।
नित्यगम्भीरतोयाभिरापगाभिरिवाम्बुधिः ॥ ३ ॥

सुमहन्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारः संशयानां च क्लिश्यन्ते लुब्धबुद्धयः ॥ ४ ॥

दानार्हेष्वप्रदातृत्वमकारणधनग्रहः ।
लोभमाहुर्महानर्थं तस्मात् तं परिवर्जयेत् ॥ ५ ॥

यथाद्रिः स्वयमुत्थेन वह्निना नाशमृच्छति ।
तथा कृतात्मा लोभेन सहजेन विनश्यति ॥ ६ ॥

भूतिलोभाभिभूतस्य भूभर्तुर्भूरिदुःखदा ।
लुब्धः प्राप व्यथां शुक्रः पिनाकिजठरालये[c] ॥ ७ ॥

सन्त्येते मददन्तिनो मदजलप्रम्लानगण्डस्थला
वातव्यायतपातिनश्च तुरगान् भूयोऽपि लप्स्येऽपरान् ।
एतल्लब्धमिदं लभे पुनरिदं लब्धेत्यभिध्यायतां ।
चिन्ताजर्जरचेतसां बत नृणां का नाम शान्तेः कथा ॥ ८ ॥

यथा निस्वः समुत्थेन वह्निना नाशमृच्छति ।
तथाकृतात्मा लोभेन सहजेन विनश्यति ॥ ९ ॥

## ॥ स्त्रीनिन्दापद्धतिः ॥ २० ॥

न स्त्रीभ्यः किंचिदन्यद्वै पापीयस्तरमस्ति वै ।
स्त्रियो हि मूलं दोषाणां तथा त्वमपि वेदिथ ॥ १ ॥

न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ २ ॥[d]

c. Mahābhārata. d. Mahābhārata. ( SBh 9 )

( १ ) श्री°.



चतुरः सृजता पूर्वमुपायांस्तेन वेधसा ।
न सृष्टः पञ्चमः कोऽपि गृह्यन्ते येन योषितः ॥ ३ ॥[e]

जल्पन्ति सार्धमन्येन पश्यन्त्यन्यं सविभ्रमाः ।
हृद्गतं चिन्तयन्त्यन्यं प्रियः को नाम योषिताम् ॥ ४ ॥[f]

शतह्रदानां लोलत्वं शस्त्राणां चातितीक्ष्णताम् ।
गरुडानिलयोः शैघ्र्यमनुगच्छन्ति योषितः ॥ ५ ॥[g]

को जातु परभावां हि नारीं व्यालीमिव स्थिताम् ।
वासयेत गृहे जानन् स्त्रीणां दोषा महात्ययाः ॥ ६ ॥[h]

यस्य जिह्वासहस्रं स्याज्जीवे[२]त्साग्रशतं च यः ।
अनन्यकर्मा स्त्रीदोषान्सोऽप्यनुक्त्वा लयं व्रजेत् ॥ ७ ॥[i]

न विषेण न शस्त्रेण नाग्निना न च मृत्युना ।
अप्रतीकारपारुष्याः स्त्रीभिरेव स्त्रियः कृताः ॥ ८ ॥[j]

नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचनाः ॥ ९ ॥[j]

किञ्चिदन्तर्हिते भानौ पद्मिनी गूढरागिणी ।
आलिङ्ग्य मधुपं शेते प्रियः को नाम योषिताम् ॥ १० ॥

न कुलं न कृता विद्या न दत्तं नापि सङ्ग्रहः ।
स्त्रीणां गृह्णाति हृदयमनित्यहृदयाः स्त्रियः ॥ ११ ॥

अन्तकः पवनो मृत्युः पातालं वडवानलः ।
क्षुरधारा विषं सर्पो वह्निरित्येकतः स्त्रियः ॥ १२ ॥[k]

या इमाः प्रेक्षसे राजन्[१] मदनव्याधवागुराः ।
आसामेव प्रभावेन ज्वलन्ति [३]नरकाग्नयः ॥ १३ ॥

प्राज्ञं विनीतं स्वाचारं विद्वांसं मन्त्रिणं तथा ।
चलयन्ति नरं नित्यमेता योषित्पिशाचिकाः ॥ १४ ॥[l]

e. Vallabhadeva. f. Pratāparudra.
g. Rāmāyaṇa. h. Manu. i. SBhg.
j. Sbhg. k. Manu. l. Mahābhārata.

( १ ) राजन्नुं°–S¹ ( २ ) °च शरदां शतम् M ( ३ ) मदना–M.

प्रायेण धनिनां दारा बहवो निरवग्रहाः ।
बाह्ये सत्युपभोगेऽपि निर्वि[1]स्रम्भा बहिर्मुखाः ॥ १५॥

मनः प्रह्लादयन्तीभिः मन्दं यान्तीभिरप्यलम् ।
महान्तोऽपि च भिद्यन्ते स्त्रीभिरद्रिरिवापगाः ॥ १६ ॥

श्रुतस्य रक्षा[2] सतताभियोगः
कुलस्य वित्तं पुरुषस्य विद्या ॥
राज्ञोऽप्रमादः प्रशमो धनस्य
स्त्रीणां तु रक्षां न हि जातु जाने ॥ [m] ॥ १७ ॥

शक्यो वन्यकरी विभिन्नकरटः कुन्तैः प्रतिव्यूहितुं
शक्या नीतिबलाश्रयेन रिपवः छत्रेण सूर्यांशवः ।
शक्यो वारयितुं [3]बलेन हुतभुक् मन्त्रप्रयोगैरहिः
सर्वस्यौषधमस्ति शास्त्रविहितं स्त्रीणां तु नास्त्यौषधम् ॥ १८ ॥

## ॥ द्यूतपद्धतिः ॥ २१ ॥

बहूनि धर्मशास्त्राणि पठन्ति द्विजसत्तमाः ।
तेषु किंस्विदिदं दृष्टं द्यूते जीयेत यत्परः ॥ १ ॥

किं ते द्यूतेन राजेन्द्र बहुदोषेण मानद ।
देवने बहवो दोषास्तस्मात् तत् परिवर्जयेत् ॥ २ ॥

द्यूतादनर्थः [4]संरम्भो द्यूतात् स्नेहक्षयो महान् ।
[5]पक्षाणां चापि महतां द्यूताद्भेदः प्रवर्तते ॥ ३ ॥[n]

धनक्षयः शिष्टगर्हा सदाचारविवर्जनम् ।
शत्रुभिः पीडनं चैव द्यूतासक्तधियां नृणाम् ॥ ४ ॥

नलश्च राजा द्यूतेन हृते राज्ये महोदये ।
धर्मदारान्परित्यज्य परदा[6]स्थिरतोऽभवत् ॥ ५ ॥

पाण्डवो धर्मराजस्तु लोकपाल इवापरः ।
स्वराज्यं धनमक्षय्यं पणमेकममन्यत ॥ ६ ॥[o]

m. Vallabhadeva. n. Kāmandaka. o. Cākṣuṣīya.
(१) °डम्बा–M. (२) राजा–S[1]. (३) ज–S[2].
(४) °संपन्नो–M. (५) अ°– M. (६) °र°–S[1].



यत्तदूर्जितमत्युग्रं क्षात्रं तेजोऽस्य भूपतेः ।
दीव्यताक्षैस्तदा तेन नूनं तदपि हारितम् ॥ ७ ॥[p]

दुरक्षान् दीव्यता राज्ञा राज्यमात्मा वयं वधूः ।
नीतानि पणतां नूनमीदृशी भवितव्यता ॥ ८ ॥[p]

धननाशोऽसुखं चैव पुत्रदाराविभर्त्सनम् ।
शत्रुभिः पीडनं चैव द्यूतासक्तधियां नृणाम् ॥ ९ ॥

## ॥ मृगयागुणाः ॥ २२ ॥

यदि घातयते कश्चित् पापसत्त्वं प्रजाहितम् ।
सर्वसत्त्वहितार्थाय न तेनासौ विहिंसकः ॥ १ ॥

द्वीपिनं शरभं सिंहं व्याघ्रं कुञ्जरमेव च ।
महिषं वानरं चैव सूकरश्वानपन्नगान् ॥ २ ॥

गोब्राह्मणहितार्थाय बालस्त्रीरक्षणाय च ।
वृद्धातुरपरित्राणे यो हिनस्ति स धर्मवित् ॥ ३ ॥

निर्मानुषामिमां सर्वे मृगा हीच्छन्ति मेदिनीम् ।
भक्षयन्ति च सस्यानि शासितव्या नृपेण ते ॥ ४ ॥

या वै शत्रुवधे वृत्तिः सा मृगाणां वधे स्मृता ।
अमाययाप्यच्छलेन मृगाणामिषुधारिभिः ॥
स्वर्गं मृगाश्च गच्छन्ति स्वयं नृपतिना हताः ॥ ५ ॥

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः ।
उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग्विनोदः कुतः [q] ॥ ६ ॥

## ॥ मृगयानिन्दापद्धतिः ॥ २३ ॥

मृगयाक्षो दिवास्वापः परिवादः स्त्रियो मदः ।
तौर्यत्रिकं वृथाटाट्या कामजो दशको गणः [r] ॥ १ ॥

p. Veṇīsaṁhāra. q. Śākuntala. r. Manu.

कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः ।
वियुज्यतेऽर्थकामाभ्यां क्रोधजेष्वात्मनैव यः [s] ॥ २ ॥

प्रच्छन्नोपगतैः शैलसरिद्विपिनकुक्षिषु ।
वधबन्धपरिक्लेशा आसन्नाटविकादिभिः ॥ ३ ॥

स्वसैन्यैश्च स्वकुल्यैश्च परि[1]भिन्नैश्च मारणम् ।
इत्यादि पृथिवीन्द्राणां मृगयाव्यसनं स्मृतम् [t] ॥ ४ ॥

यस्मात्तु व्यसनं राज्ञस्त्वनुमोदन्ति शत्रवः ।
तदसह्यतरं दुःखं म[3]न्यन्ते मरणादपि ॥ ५ ॥

मृगतृष्णेव मृगया मृगानिव नराधिपान् ।
हरन्ति पतयन्त्याराच्छ्वभ्रेष्विव विपत्तिषु ॥ ६ ॥

पाण्डुर्जित्वा बहून् देशान् युधा विक्रमणेन च ।
मृगव्यवायनिधने[4] कृच्छ्रां प्राप स आपदम् [u] ॥ ७ ॥

नृपतेः प्रतिषिद्धमेव यत् कृतवान्
पङ्क्तिरथोऽविशङ्कितम् ।
अपथे पदमर्पयन्ति हि
श्रुतवन्तोऽपि रजोनिमीलिताः [v] ॥ ८ ॥

## ॥ पानदोषपद्धतिः ॥ २४ ॥

अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ १ ॥

अयुक्तं बहु भाषन्ते यत्र क्वचन शेरते ॥ ॥
नग्ना विक्षिप्य गात्राणि नष्टसंज्ञा इवासते ॥ २ ॥

ये पिबन्ति महामोहं पानं पापयुता नराः ।
कलिं ते कुर्वतेऽभीक्ष्णं प्रहरन्ति परस्परम् ॥ ३ ॥

गुरूनतिवदेन्मत्तः परदारान् प्रधर्षयेत् ।
सहितं कुरुते शौण्डं न शृणोति हितं क्वचित् ॥ ४ ॥

s. Manu
t. Kāmandaka
u. Mahābhārata.
v. Kālidāsa.

(१) °र°–$S_1$. (२) °ने स्थि–M. (३) मृग्य°–M. (४) °नं–$S^1$.



## ॥ वाक्पारुष्यपद्धतिः ॥ २५ ॥

तीव्राण्युद्वेगकारीणि विसृष्टान्यशमात्मकैः ।
कृन्तन्ति देहिनां मर्म शस्त्राणि[1] च वचांसि च [w] ॥ १ ॥

क्रूरक्रकचसंकाशे वाक्पारुष्यकरे नृपे ।
राज्योद्यानलतालक्ष्मीः पोषणामर्हते कथम् ॥ २ ॥

शपता यत् कृतं पापं शप्यमानं नियच्छति ।
शप्यमानस्य यत् पापं शपन्तं तं नियच्छति ॥ ३ ॥

संरोहति शरैर्विद्धं वरं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम् ॥ ४ ॥

कर्णनालीकनाराचा निष्पतन्ति शरीरतः ।
वाक्छल्यं तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥ ५ ॥

वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्परं मर्मसु ते पतन्ति
तान् पण्डितो नाप[2]सृजेत्परेषु ॥ ६ ॥

मर्माण्यस्थीनि हृदयं तथासून्
घोरा वाचो निर्दहन्तीव पुंसाम् ।
तस्माद्वाचं रुशतीं रूक्षरूपां
धर्मारामो नित्यशो वर्जयेत्ताम् ॥ ७ ॥[x]

## ॥ दण्डपारुष्यपद्धतिः ॥ २६ ॥

अस्थाने ह्य[3]पि च स्थाने स[4]ततं चानुगामिनी ।
क्रुद्धो दण्डान् प्रणयति विविधांस्तेजसा वृतः ॥ १ ॥

सन्तापलोभमोहांश्च शत्रूंश्च लभते नृ[5]पः ।
क्रोधा[6]द्दण्डान्मनुष्येषु विधिना नृपतिर्न[7]यन् ॥ २ ॥

w. Kāmandaka.
x. Mahābharāta.

(१) °णीव°–M. (२) °वि°– $S^1$ °व°– $S^1$ (३) °प्यपि–M.
(४) संत°–M. (५) नरः–$S^1$ °घन्°–M. (६) क्रोधद°–$S_2$.
(७) °येत्°–M. $S^2$.

तस्मादुद्विजते लोकः सर्पाद्वेश्मगतादिव ।
दण्डपारुष्यदोषेण विलुप्यन्तेऽखिलाः प्रजाः ॥
क्षपयत्युग्रदण्डो हि जनं राजा यमोपमः ॥ ३ ॥

स्खलितः स्खलितो वध्य
इति चेन्निश्चितं भवेत् ।
द्विना यद्यवशिष्येरन्
बहुदोषा हि मानवाः ॥ ४ ॥[y]

## ॥ अर्थदूषणपद्धतिः ॥ २७ ॥

अर्थानामननुष्ठाता कामचारी विकत्थनः ।
अपि सर्वां महीं लब्ध्वा क्षिप्रमेव विनश्यति ॥ १ ॥

अनर्थे चैव निरतमर्थे चैव पराङ्मुखम् ।
न तं भर्तारमिच्छन्ति षण्डं पतिमिव स्त्रियः ॥ २ ॥

योऽर्थकामस्य वचनं प्रातिकूल्यान्न मृष्यते ।
शृणोति प्रतिकूलानि द्विषतां वशमेति सः ॥ ३ ॥

सुहृदां हितकामानां यो न तिष्ठति शासने ।
प्राज्ञानां कृतविद्यानां स नरः शत्रुनन्दनः ॥ ४ ॥

अर्थस्य दूषणार्थं हि परित्यागो महीयसः ।
अर्थस्य नीतितत्त्वज्ञैरर्थदूषणमुच्यते ॥ ५ ॥

अन्यायोपार्जितं द्रव्यमर्थदूषणमुच्यते ।
अपात्रदानं पात्रार्थहरणं तस्य लक्षणम् ॥ ६ ॥

तदकस्मात् सदाविष्टः कोपेनातिबलीयसा ।
नित्यमात्महिताकाङ्क्षी न कुर्यादर्थदूषणम् ॥ ७ ॥[z]

y. Mahābhārata.
( १ ) लोभेन
( २ ) °न्येनो–M.

z. Mahābhārata.
( १ ) दूष्यस्य–M.
( ३ ) °मा°–M.



## ॥ हर्षपद्धतिः ॥ २८ ॥

सम्प्रहासः स्वभृत्येषु न कर्तव्यो नराधिप ।
( राजा लघुत्वं ) चाप्नोति ह्याज्ञा तस्य निवर्तते ॥ १ ॥

अवमन्यन्ति भर्तारं लङ्घयन्ति च तद्वचः ।
प्रेष्यमाणा विकल्पन्ते गूढमप्यनुयुञ्ज्यते ॥ २ ॥

अर्थांश्चैव याचन्तेऽभोज्यान् व्याहारयन्ति च ।
उत्कोचैर्वञ्चनाभिश्च कार्याणि घ्नन्ति चास्य ते ॥ ३ ॥

जर्जरं चास्य विषयं कुर्वन्ति प्रतिशासनैः ।
क्षुतं च ष्ठीवनं चैव कुर्वते चास्य संनिधौ ॥ ४ ॥

हयं वा दन्तिनं चापि रथं वा नृपसंमतम् ।
अधिरोहन्त्यनादृत्य हर्षुलं पार्थिवं मृदुम् ॥ ५ ॥

हेलयन्तश्च कुर्वन्ति सावज्ञास्तस्य शासनम् ।
निन्दन्ति स्वानधीकारान् सन्त्यजन्ति च भारत ॥ ६ ॥

न वृत्या परितुष्यन्ति राजदेयं हरन्ति च ।
अस्मत्प्रणेयो राजेति लोके चैव वदन्त्युत ॥ ७ ॥

एते चान्ये च बहवो दोषाः प्रादुर्भवन्त्युत ।
नृपतौ मार्दवोपेते हर्षुले च युधिष्ठिर ॥ ८ ॥[a]

## ॥ असूयापद्धतिः ॥ २९ ॥

अनार्यवृत्तमप्राज्ञमसूयुकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं कोपनं तथा ॥ १ ॥

## ॥ साहसपद्धतिः ॥ ३० ॥

साहसप्रकृतिर्यस्तु क्रियते किंचिदुल्बणम् ।
अशास्त्रलक्षणो राजा क्षिप्रमेव विनश्यति ॥ १ ॥

a. Mahābhārata.
( ४ ) भर्तारमवमन्यन्ते–M. ( ५ ) °ञ्ज°–M. ( ६ ) °वि°–M.
( ७ ) °तनि°–M. ( ८ ) °र्व°–M. ( ९ ) खे°–M. ( १० ) °ज्यमेव°–M.
( १ ) °न्ति च M. ( २ ) °र्ष°–M. ( ३ ) °दूष्यं–$S_1$.

अदाता ह्यनभिस्नेहो दण्डेनावर्जयेत् प्रजाः ।
साहसप्रकृती राजा क्षिप्रमेव विनश्यति ॥ २ ॥

महापापानि कर्माणि यानि केवलसाहसात् ।
आरभ्यते भीमसेन व्यथं[४]ते तानि भारत (?) ॥ ३ ॥[a]

## ॥ मानपद्धतिः ॥ ३१ ॥

लक्ष्मीलतां[५] प्रमथ्नाति राज्ञां मान[६]महाशनिः ।
ह्रदान्तर्मकरीदन्तक्लेशं सेहे सुयोधनः ॥ १ ॥

अतिमानः श्रियं हन्ति पुरुषस्याल्पमेधसः ।
गर्भेण दूष्यते कन्या गृहवासेन च द्विजः ॥ २ ॥

जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान् धर्मचर्यामसूया ॥
क्रोधः श्रियं शीलमनार्यसेवा
ह्रियं कामः सर्वमेवाभिमानः ॥ ३ ॥[a]

## ॥ प्रमादपद्धतिः ॥ ३२ ॥

क्षत्रियस्य प्रमत्तस्य क्रोधः सञ्जायते महान् ।
अधर्माः सम्प्रवर्तन्ते प्रजासम्मोहकारकाः ॥ १ ॥[b]

चातुर्वर्ण्यं तथा वेदाश्चातुराश्रम्यमेव च ।
सर्वमेतत्प्रमुह्येत यदा राजा प्रमाद्यति ॥ २ ॥

राज्ञः प्रमाददोषेण दस्युभिः परिमुष्यते ।
अशरण्यः प्रजानां यः स राजा कलिरुच्यते ॥ ३ ॥

लोकवृत्ताद्राजवृत्तमन्यदाह बृहस्पतिः ।
तस्माद्राज्ञा विशेषेण[१] स्वार्थश्चिन्त्योऽप्रमादतः ॥ ४ ॥

प्रमादं वै मृत्युमहं ब्रवीमि
सदाप्रमादादमृतत्वं ब्रवीमि ।
प्रमादाद्वासुराः पराभवन्ति[२]
सदा[३] प्रमादाद् ब्रह्मभूताः सुराश्च ॥ ५ ॥[b]

a. b. Mahābhārata.
(४) °द°-M. (५) °लं°-S1. (६) कालं-S1.
१. विशेषतः-M. २. प्रहरन्ति-M. ३. प्रमादाद्वै-M.



## ॥ दिवास्वप्ननिन्दापद्धतिः ॥ ३३ ॥

न दिवा प्रस्वपेज्जात, न पूर्वापररात्रयोः ।
न स्वपेदेषु यो राजा तस्येयं सुदृढा मतिः ॥ १ ॥

स्वप्ने हि रजसा देही तमसा चाभिभूयते ।
देहान्तरमिवापन्नश्चरत्यन्यगतस्मृतिः ॥ २ ॥

## ॥ परिवादपद्धतिः ॥ ३४ ॥

न वाच्यः परिवादो वै न श्रोतव्यः कदाचन !
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥ १ ॥

आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ २ ॥

आक्रोशनावमानाभ्यामबुधो वर्धयेद् बुधान् ।
तस्माच्च[१] स्पर्धयेदन्यं न चात्मानं विहिंसयेत् ॥ ३ ॥

सङ्ग्रामान् विपुलान् जित्वा लब्ध्वा च विपुलं धनम् ।
विजित्य च महीं कृत्स्नां न विकत्थेत पण्डितः ॥ ४ ॥[c]

## ॥ राजवृत्तपद्धतिः ॥ ३५ ॥

यथा हि रश्मयोऽश्वस्य द्विरदस्याङ्कुशो[२] यथा ।
नरेन्द्रधर्मो लोकस्य तथा प्रग्रहणं स्मृतम् ॥ १ ॥[c]

न्यायेनार्जनमर्थस्य वर्धनं पालनं तथा ।
सत्पात्रे प्रतिपत्तिश्च राजवृत्तं चतुर्विधम् ॥ २ ॥

धर्मार्थं क्षीणकोशस्य कृशत्वमपि शोभते ।
सुरैः पीतावशेषस्य शरद्धिमरुचेरिव ॥ ३ ॥

संवर्धयेत् तथा को[३]शमाप्तैस्तज्ज्ञैरधिष्ठितम् ।
काले चास्य व्ययं कुर्यात् त्रिवर्गपरिवृद्धये ॥ ४ ॥

c. Mahābhārata.
(१) वं-M. (२) °शो-M. (३) क्लेश°-M.

अर्थत्यागो हि कार्यः स्यादर्थं श्रेयांसमिच्छता ।
बीजोपम्येन कौन्तेय मा ते भूदत्र संशयः ॥ ५ ॥[d]

नाममात्रेण सन्तुष्येच्छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ ६ ॥[d]

न चास्य लभ्यं [४]लिप्सेत [५]मूलेनातिदृढे सति ।
न हि दुर्बलमूलस्य राज्ञ्लाभोऽपि विद्यते ॥ ७ ॥

सिद्धं वञ्चनयोपैति परस्परवधेन वा ।
निरपायं सुखं तत्र द्वयोः किमिति चिन्त्यताम् ॥ ८ ॥

वने प्रज्वलितो वह्निर्दहन् मूलानि रक्षति ।
समूलमुन्मूलयति वार्यलं मृदु शीतलम् ॥ ९ ॥

यस्य सिध्यत्ययत्नेन शत्रुः स विजयी नृपः ।
य एकतरतां गत्वा जयी विजित एव सः ॥ १० ॥

जडोऽयमिति नात्यन्तं हीनमप्युपघातयेत् ।
निर्दयन् निहतोऽश्मापि वमति ज्योतिषः कणान् ॥ ११ ॥

आयद्वारेषु सर्वेषु कुर्यादाप्तान् परीक्षितान् ।
आददीत धनं तैस्तु भास्वानुस्रैरिवोदकम् ॥ १२ ॥[1]

[३]कोष्ठागारे[४]ऽभियुक्तः स्यात्तदायत्तं हि जीवितम् ।
नात्यायं च व्ययं कुर्यात् प्रत्यवेक्षेत चान्वहम् ॥ १३ ॥[1]

समानान्वय[५]जातानां परस्परविरोधिनाम् ।
परैः प्रत्यभियुक्तानां प्रसूते संहतिः श्रियम् ॥ १४ ॥

सर्वमात्यन्तिकं कार्यं शृणुयान्नातिपातयेत् ।
कृच्छ्रसाध्यमतिक्रान्तमसाध्यमपि भावयेत् ॥ १५ ॥

अपूर्वदेशाधिगमे युवराजाभिषेचने ।
पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥ १६ ॥

असंवृत्तस्य कार्याणि प्राप्तान्यपि विशेषतः ।
निस्संशयं विपद्यन्ते भिन्नः प्लव इवोदधौ ॥ १७ ॥

---

d. Mahābhārata. 1. Kāmandaka.
(४) लिप्स्येत–M. (५) मूलेनातिदृढेन वै–M.
१. च–M. २. °य°–M. ३. गो'–M. ४. °षु युक्तः–M.
५. जातीनां°–M.



अपकुर्यात् समर्स्तं वा नोपकुर्याद्यदापदि ।
उच्छिन्द्यादेव तन्मित्रं विश्वस्याङ्कमुपागतम् ॥ १८ ॥

यतो निमित्तं व्यसनं प्रकृतीनामवाप्नुयात् ।
प्रागेव प्रतिकुर्वीत तन्निमित्तमतीन्द्रियः ॥ १९ ॥

पुनरावर्तमानस्य निराशस्य च जीविते ।
अधार्यो जायते वेगस्तस्माद् भग्नं च पीडयेत् ॥ २० ॥[e]

आस्रावयेदुपचितान् साधु दुष्टव्रणानिव ।
आयुक्तास्ते च वर्तेरन्नग्नाविव महीपतौ ॥ २१ ॥[f]

परीक्ष्य दुर्जनान् राजा स्वराष्ट्राद् विप्रवासयेत् ।
क्षोभयिष्यन्ति ते राष्ट्रं सद्रूपं समवस्थिताः ॥ २२ ॥

तेजस्विनि क्षमोपेते नातिकर्कशमानयेत् ।
अतिनिर्मथनादग्निश्चन्दनादपि जायते ॥ २३ ॥[g]

एकया द्वौ विनिश्चित्य त्रींश्चतुर्भिर्वशीकुरु ।
पञ्च जित्वा वि[१]दित्वा षट् सप्त हित्वा सुखी भव ॥ २४ ॥

धर्मः प्रागेव चिन्त्यः सचिवमतिगती सर्वदाऽऽलोकनीये
ज्ञेयं लोकानुवृत्तं वरचरनयनैर्मण्डलं वीक्षणीयम् ।
प्रच्छाद्यौ रागरोषौ मृदुकठिनरसौ योजनीयौ स्वकालेऽ
प्यात्मा यत्नेन रक्ष्यो रणशिरसि पुनः सोऽपि नावेक्षणीयः ॥ २५ ॥

कोऽहं कौ देशकालौ समविषमगुणाः केऽरयः के सहायाः ।
का शक्तिः कोऽभ्युपायः फलमपि च कियत्कीदृशी दैवसम्पत् ।
सम्पत्तौ कोऽनुबन्धः प्रतिहतवचनस्योत्तरं किं नु मे स्या–
दित्येवं कार्यसिद्धाववहितमनसो नापहास्या भवन्ति ॥ २६ ॥

भीरुः पलायमानोऽपि नावेष्टव्यो बलीयसा ।
कदाचिच्छूरतामेति मरणे कृतनिश्चयः ॥ २७ ॥

अणुनापि प्रविश्यारिच्छिद्रेण बलवत्तरम् ।
निःशेषं मज्जयेद्राज्यं यानपात्रमिवोदकम् । ॥ २८ ॥

---

१. °र्थं°–M. २. बाध्यो–M. ३. अ°–M. ४. °दि°–M.
५. °णून्य°–M. ६. °द्राणि°–M.
e. Kauṭilya f. Kāmandaka. g. Vallabhadeva.

प्रहरिष्यन् प्रियं ब्रूयात्प्रहरन्नपि भारत ।
प्रहृत्य च प्रियं ब्रूयाच्छोचन्निव रुदन्निव ॥ २९ ॥

बलिनं साधयेत्साम्ना लुब्धमर्थप्रदानतः ।
शूरं भेदेन च तथा ह[1]न्याद्दण्डेन दुर्बलम् ॥ ३० ॥

यस्य चाप्रियमन्विच्छेद् ब्रूयात्तस्य सदा प्रियम् ।
व्याधा मृगवधं कर्तुं रम्यं गायन्ति सुस्वरम् ॥ ३१ ॥

नोपेक्षितव्यो विद्वद्भिः शत्रुरल्पोऽप्यवज्ञया ।
वह्निरल्पोऽपि संवृद्धः कुरुते भस्मसाद्वनम् ॥ ३२ ॥[h]

गृध्रवद्दीर्घकालीनः श्वचेष्टः सिंहविक्रमः ।
अनुद्विग्नः काकशङ्की भुजङ्गचरितं चरेत् ॥ ३३ ॥

बकवच्चिन्तयेदर्थान् सिंहवच्च पराक्रमेत् ।
वृकवच्चावलुम्पेत शशवच्च विनिष्पतेत् ॥ ३४ ॥[i]

विपाकदारुणो राज्ञां रिपुरल्पोऽप्यरुन्तुदः ।
उद्वेजयति सूक्ष्मोऽपि चरणं कण्टकाङ्कुरः ॥ ३५ ॥[j]

वहेदमित्रं स्कन्धेन यावत्कालविपर्ययः ।
अथैवमागते काले भिन्द्याद्घटमिवाश्मनि ॥ ३६ ॥

आदातव्यं न दातव्यमाशामेव प्रदर्शयेत् ।
आशां कालवतीं कुर्यात्कालं विघ्नेन योजयेत् ॥ ३७ ॥

कौर्मं[2] संकोचमास्थाय प्रहारानपि मर्षयेत् ।
काले प्राप्ते तु मतिमानुत्तिष्ठेत् क्रुद्धसर्पवत् ॥ ३८ ॥

सुपुष्पितः स्यादफलो दु[3]रारोहः फलान्वितः ।
आमः स्यात् पक्वसंकाशो न च शी[4]र्येत कस्यचित् ॥ ३९ ॥

नहि कश्चित् कृते कार्ये कर्तारं सम[5]वेक्षते ।
ततः सर्वाणि कार्याणि सावशेषाणि कारयेत् ॥ ४० ॥

सम्भाष्य बुद्धिं जानीयाच्छीलं च सह संवसन् ।
शौ[1]चं संव्यवहारेण परमापत्सु पौरुषम् ॥ ४१ ॥

h. Vallabhadeva ( Sbhg. ) i. Manu.
j. Prabodhacandrodaya.
१. द°–$S_1$. २. °मैं°–M. ३. °स्वा°–M. ४. °ति–M. ५. °पे°–M.



कार्यस्य हि गरीयः स्यान्नीचानामपि कालवित् ।
सतोऽपि दोषान् प्रच्छाद्य गुणानप्यसतो वदेत् ॥ ४२ ॥

वाचा भृशं विनीतः स्याद् हृदयेन तथा क्षुरः ।
शक्रः[1] पूर्वाभिभाषी स्यात् सृष्टो रौद्राय कर्मणे ॥ ४३ ॥

अश्मना साधयेल्लोहं लोहेनाश्मानमेव च ।
बिल्वानिव करे बिल्वैः म्लेच्छान् म्लेच्छैः प्रसाधयेत् ॥४४॥

आत्मना सङ्गृहीतेन शत्रुणा शत्रुमुद्धरेत् ।
पदलग्नं करस्थेन कण्टकेनैव कण्टकम् ॥ ४५ ॥

कर्मणा मनसा वाचा चक्षुषा च चतुर्विधम् ।
प्र[2]सादयति लो[3]कं यस्तं लोको[4]ऽनुप्रसीदति ॥ ४६ ॥[k]

समूलघातम[5]घ्नन्तः पराञ्जोद्यन्ति मानिनः ।
प्रध्वंसितान्धतमसस्तत्रोदाहरणं रविः ॥ ४७ ॥[l]

ऋणशेषोऽग्निशेषश्च शत्रुशेषस्तथैव च ।
अल्पोऽपि वर्धतेऽत्यर्थं तच्छेषं नैव कारयेत् ॥ ४८ ॥[m]

न[6] स क्षयो महाराज ! यः क्षयो वृद्धिमावहेत् ।
क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥ ४९ ॥

प्रजासुखे सुखं राज्ञः प्रजानां वा हिते हितम् ।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम् ॥ ५० ॥[n]

अहापयन् नृपः कालं प्रजानामनुवर्तिनाम् ।
कर्मणामानुरूप्येण वृत्तिं समनुकल्पयेत् ॥ ५१ ॥[o]

एवं वृत्तस्य राज्ञस्तु सिलोञ्छेनोपजीवितः ।
विसर्पते यशो लोके तैलबिन्दुरिवाम्भसि ॥ ५२ ॥[p]

अतस्तु विपरीतस्य नृपतेरकृतात्मनः ।
संक्षिप्यते यशो लोके घृतबिन्दुरिवाम्भसि ॥ ५३ ॥[p]

आभ्यन्तराद् भयं रक्षेत् सुरक्षेद् बाह्यतो भयम् ।
आभ्यन्तराद् भयं जातं सह मूलं निकृन्तति ॥ ५४ ॥

k. Mahābhārata. l. Māgha.
m. Daṇḍanīti. n. Kauṭilya. o. Kāmandaka. p. Manu.
१. शक्यः–M. २. °सी°–M. ३. लोकोऽयं ४. लोको न–M.
५. °श्न°–M. ६. स न–M.

अनुरक्तेन हृष्टेन तुष्टेन जगतीपतिः ।
अल्पेनापि स्वसैन्येन भूमिं जयति भूमिपः ॥ ५५ ॥

पुत्रो भ्राता पिता चैव गुरुर्वा यदि वा सुहृत् ।
अर्थस्य विघ्नं कुर्वाणाः कर्तव्या भूमिवर्धनाः ॥ ५६ ॥

अनुयुक्तो दस्युवधे रणे कुर्यात् पराक्रमम् ।
नास्य कृत्यमतः किञ्चिदन्यद्दस्युनिबर्हणात् ॥ ५७ ॥

अपशास्त्रधनो राजा सञ्चयं नाधिगच्छति ।
अस्थाने चास्य तद्वित्तं सर्वमेव विनश्यति ॥ ५८ ॥[q]

इन्द्रस्यार्कस्य वायोश्च यमस्य वरुणस्य च ।
चन्द्रस्य च पृथिव्याश्च नृपः समगुणो भवेत् ॥ ५९ ॥

यथेन्द्रश्चतुरो मासान् वार्षिकानभिवर्षति ।
एवं राष्ट्रं परीहारैरभिवर्षेज्जनाधिपः ॥ ६० ॥

अष्टौ मासान् तथादित्यस्तोयं हरति रश्मिभिः ।
एवं राष्ट्रं करं राजा हरेदादित्यसंनिभः ॥ ६१ ॥

प्रविश्य सर्वभूतानि यथा चरति मारुतः ।
चारैरेवं चरेद्राजा वृत्तमेतत्तु मारुतम् ॥ ६२ ॥

यथा प्रियं वा द्वेष्यं वा प्राप्तकालं नियच्छति ।
यथार्हं दण्डयेद्राजा वृत्तं वैवस्वतं हि तत् ॥ ६३ ॥

यथा धावन्ति नद्यस्तु सिन्धुमाकाङ्क्षया विना ।
तथा नाकाङ्क्षते राजा वृत्तमेतत्तु वारुणम् ॥ ६४ ॥

परिपूर्णं यथा चन्द्रं दृष्ट्वा हृष्यन्ति मानवाः ।
एवं प्रकृतयो नित्यं हृष्यन्ति नृपतेर्गुणैः ॥ ६५ ॥

यथा सर्वाणि भूतानि धरा धारयते समम् ।
पौरजानपदान् सर्वांस्तथा राजापि धारयेत् ॥ ६६ ॥

लक्ष्मीपरिपूर्णोऽहं न भयं मेऽस्तीति मोहनिद्रेषा ।
परिपूर्णस्यैवेन्दोर्भवति भयं सिंहिकासूनोः ॥ ६७ ॥

q. Mahābhārata.

१. नित्योद्यु°–M.



वसूनि वाञ्छन्न वशी न मन्युना
　　स्वधर्म इत्येव निवृत्तकारणः ।
गुरूपदिष्टेन रिपौ सुतेऽपि वा
　　निहन्ति दण्डेन स धर्मसम्प्लवम् ॥ ६८ ॥[r]

विभज्य रक्षां परितः परेतरा-
　　नशङ्किताकारमुपैति शङ्कितः ।
क्रियापवर्गेष्वनुजीविसात्कृताः
　　कृतज्ञतामस्य वदन्ति सम्पदः ॥ ६९ ॥[s]

अनारतं तेन पदेषु लम्भिता
　　विभज्य सम्यग्विनियोगसत्क्रियाः ।
फलन्त्युपायाः परिबृंहितायती-
　　रुपेत्य सङ्घर्षमिवार्थसम्पदः ॥ ७० ॥[s]

व्रजन्ति ते मूढधियः पराभवं
　　भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधा-
　　नसंवृताङ्गान् निशिता इवेषवः ॥ ७१ ॥[1]

बलोपपन्नोऽपि हि बुद्धिमान् नरः
　　परं नयेन्न स्वयमेव वैरिताम् ।
भिषङ्ममास्तीति विचिन्त्य भक्षये-
　　दकारणं को नु विषं विचक्षणः ॥ ७२ ॥

द्विषतामुदयः सुमेधसा गुरुरस्वन्ततरस्तु मृष्यते ।
न महानपि भूतिमिच्छता फलसम्पत्प्रवणः परिक्षयः ॥ ७३ ॥[s]

अचिरेण परस्य भूयसीं विपरीतां विगणय्य चात्मनः ।
क्षययुक्तिमुपेक्षते कृती कुरुते तत्प्रतिकारमन्यथा ॥ ७४ ॥[s]

शुचि भूषयति श्रुतं वपुः प्रशमस्तस्य भवत्यलङ्क्रिया ।
प्रशमाभरणं पराक्रमः स नयापादितसिद्धिभूषणः ॥ ७५ ॥[s]

क्षययुक्तमपि स्वभावजं दधतं धाम शिवं समृद्धये ।
प्रणमन्त्यनपायमुत्थितं प्रतिपच्चन्द्रमिव प्रजा नृपम् ॥ ७६ ॥[s]

r. Bhāravi.　　s. Bhāravi

प्रभवः खलु कोशदण्डयोः कृतपञ्चाङ्गविनिर्णयो नयः ।
स विधेयपदेषु दक्षतां नियतिं लोक इवानुरुध्यते ॥ ७७ ॥[t]

यदैव राज्ये क्रियतेभिलाषं[1]–
स्तदैव देया व्यसनेषु बुद्धिः ः ।
घटा हि[2] राज्ञामभिषेककाले
सहाम्भसा व्यापदमुद्गिरन्ति ॥ ७८ ॥[u]

उत्साहसम्पन्नमदीर्घसूत्रं क्रियाविधिज्ञं व्यसनेष्वसक्तम् ।
शूरं कृतज्ञं दृढनिश्चयं च लक्ष्मीः स्वयं वाञ्छति वासहेतोः ॥ ७९ ॥

कार्यार्थिनः क्षीणतरस्य नैव निःशेषकार्यं कुटिलस्य कुर्यात् ।
दोषाकरः प्राप्तविवृद्धदर्पः पलायते दूरतरं हि मित्रात् ॥ ८० ॥[v]

सर्वे धर्मा राजधर्मप्रधानाः सर्वे वर्णाः पाल्यमाना भवन्ति ।
सर्वोद्योगा राजधर्मे निविष्टाः स्थानं चाग्र्यं राजधर्मे पुराणम् ॥ ८१ ॥

औत्सुक्यमात्रमवसाययति प्रतिष्ठा
क्लिश्नाति लब्धपरिपालनवृत्तिरेव ।
नातिश्रमापनयनाय न च श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम् ॥ ८२ ॥[w]

परोऽपि हितकृद्बन्धुः बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ ८३ ॥

केचिन्मृगमुखा व्याघ्राः केचिद्व्याघ्रमुखा मृगाः ।
तत्स्वरूपविपर्यासाद् विश्वासो ह्यापदां पदम् ॥ ८४ ॥

लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्मणा ।
मूर्खं छन्दानुरोधेन याथातथ्येन पण्डितम् ॥ ८५ ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥ ८६ ॥[x]

आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम् ।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान् ॥ ८७ ॥[y]

t. Bhāravi. u. Pañcatantra. v. Rājaśekhara.
w. Kālidāsa. x. Manu y. Hitopadeṣa
१. °लाषा°–M. २. °भि°–M.



अप्रियस्यापि वचसः परिणामविरोधिनः ।
वक्ता श्रोता च यत्रास्ते रमन्ते तत्र सम्पदः ॥ ८८ ॥

प्राज्ञे नियोज्यमाने तु सन्ति राज्ञस्त्रयो गुणाः ।
यशः स्वर्गनिवासश्च विपुलश्च धनागमः ॥ ८९ ॥[z]

मूर्खे नियोज्यमाने तु त्रयो दोषा महीपतेः ।
अयशश्चार्थनाशश्च नरके गमनं तथा ॥ ९० ॥[z]

त्यजति भयमकृतपापो मित्राणि शठः प्रमादिनं विद्या ।
ह्रीः कामिनमलसं श्रीः स्त्री क्रूरं दुर्जनं लोकः ॥ ९१ ॥

गुण एव नालमृजुता कौटिल्यं दोष एव नहि जन्तोः ।
ऋजुरपि मारयति शरो वक्रोऽपि धनुस्तनुं न पालयति ॥ ९२ ॥

कोलकोकिलभृङ्गानां बकव्यालशिखण्डिनाम् ।
हंसानां लोहकारस्य शिक्षयेच्चरितं नृपः ॥ ९३ ॥

उत्कोचपारितोषिकभागसुभाषितकथार्थचौर्यांशाः ।
तत्क्षणमेव ग्राह्या षडन्यकाले न लभ्यन्ते ॥ ९४ ॥

आलस्योपहतः पादः पादः पाषण्डमाश्रितः ।
राजानं देव ते पादः पादः कृषिमुपासितः ।
एकं पादं त्रयः पादं भक्षयन्ति दिने दिने ॥ ९५ ॥

तथा विवर्धते पादं क्षीणप्रायं पदत्रयम् ।
तस्मात् सर्वप्रयत्नेन तं पादं रक्षयेन्नृपः ॥ ९६ ॥

## ॥ दिनचर्यापद्धतिः ॥ ३६ ॥

प्रातरुत्थाय नृपतिः कुर्याद् दन्तस्य धावनम् ।
स्नानशालं समागम्य स्नात्वा पूतेन वारिणा ॥ १ ॥

अर्घ्यं दत्त्वा स देवाय भास्कराय समाहितः ।
ततोऽलङ्कृतगात्रः सन् वृत्तमालोक्य मन्त्रवत् ।
घृतपात्रं तु विप्राय दद्यात् सकनकं नृपः ॥ २ ॥

z. S'bhg.

वारं पुरस्ताद् द्युनिशां[1] विभज्य
तारं परस्तात् तिथिमेव पश्चात् ।
सूर्येन्दुयोगात्[2] करणानि भूपः
संश्रावयेद्दैवविदेव काले ॥ ३ ॥

तत्र स्थिताः प्रजाः सर्वाः प्रविनन्द्य विसर्जयेत् ।
विसृज्य च प्रजाः सर्वाः मन्त्रयेत् सह मन्त्रिभिः ॥ ४ ।

एवं सर्वमिदं राजा सम्मन्त्र्य सहमन्त्रिभिः ।
व्यायम्याप्लुत्य मध्याह्ने भोक्तुमन्तःपुरं व्रजेत् ॥ ५ ॥

तत्रात्मभृत्यैः[3] कालज्ञैराचार्यैः[4] परिचारकैः ।
सुपरीक्षितमन्नाद्यमद्यान्मन्त्रैर्विषापहैः ॥ ६ ॥

विषघ्नैरगदैश्चास्य[5] सर्वद्रव्याणि योजयेत्[6] ।
विषघ्नानि च रत्नानि नियतो धारयेत् सदा ॥ ७ ॥

परीक्षिताः स्त्रियश्चैनं व्यजनोदकधूपनैः ।
वेशाभरणसंशुद्धाः संस्पृशेयुः समाहिताः ॥ ८ ॥

अन्नपानं विषाद्रक्षेत् विशेषेण महीपतेः ।
योगक्षेमौ तदायत्तौ धर्माद्या यन्निबन्धनाः ॥ ९ ॥

एवं प्रयत्नं कुर्वीत यानशय्यासनाशने ।
स्थाने प्रसाधने चैव सर्वालङ्कारकेषु च ॥ १० ॥

नाप्रेक्षितं नाविदितं भिषजा नानवेक्षितम् ।
नाप्याशितं च सूदाद्यैः किञ्चिदत्त्याहरेन्नृपः ॥ ११ ॥

इतिहासपुराणानि श्रुणुयात् तदनन्तरम् ।
भुक्तवान् विहरेच्चैव स्त्रीभिरन्तःपुरे सह ॥ १२ ॥

विहृत्य च यथाकालं पुनः कार्याणि चिन्तयेत् ।
अलङ्कृतश्च सम्पश्येदायुधीयं पृथग्जनम् ॥ १३ ॥

वाहनानि च सर्वाणि शस्त्राण्याभरणानि च[7] ।
सन्ध्यां चोपास्य श्रुणुयादन्तर्वेश्मानि शस्त्रभृत्[8] ॥ १४ ॥

---

१. °ति°–S₁. २. °न्°–S₁. ३. °भूतैः–M.
४. °रभार्यैः–M. ५. रुदकै°–M. ६. ते°–M.
७. व°–M. ८. शास्त्रवित्–M.



रहस्याख्यायिकां[1] चैव प्रणिधीनां[2] च चेष्टितम् ।
गत्वा कक्षान्तरं सम्यक् समनुज्ञाप्य तं जनम् ॥ १५ ॥

## ॥ करादानपद्धतिः ॥ ३७ ॥

यथा[3] फलेन युज्येत राजा कर्ता च कर्मणाम् ।
तथावेक्ष्य[4] नृपो राष्ट्रे[5] कल्पयेत् सततं करान् ॥ १ ॥

पुष्पं पुष्पं प्रचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न तथाङ्गारकारकः ॥ २ ॥

यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान् मनुष्येभ्य आदद्यादविहिंसया ॥ ३ ॥

वत्सोपम्येन दोग्धव्यं राष्ट्रमक्षीणबुद्धिना ।
भृतो वत्सो जातबलः पीडां सहति भारत ॥ ४ ॥

ऊधश्छिनत्ति यो धेन्वाः क्षीरार्थी न लभेत् पयः ।
एवं राष्ट्रमयोगेन पीडयन् नाभिवर्धते[6] ॥ ५ ॥

कालप्राप्तमुपादद्यान्नार्थं राजा प्रसूचयेत् ।
अहन्यहनि सन्दुह्यन्महीं गामिव बुद्धिमान् ॥ ६ ॥

जलूकावत् पिबेद्राष्ट्रं मृदुनैव नराधिपः ।
व्याघ्रीवापहरेत् पुत्रं न दंशेन्नच पीडयेत्[7] ॥ ७ ॥

क्रयविक्रयमर्घ्वानं भक्तं च व्रीहितण्डुलम् ।
योगक्षेमं च सम्प्रेक्ष्य वणिजः कारयेत् करान् ॥ ८ ॥

प्रजानामेव भूत्यर्थं स ताभ्यो बलिमग्रहीत् ।
सहस्रगुणमुत्स्रष्टुमादत्ते हि रसं रविः ॥ ९ ॥[a]

सदयं बुभुजे स महाभुजः
सहसोद्वेगमियं व्रजेदिति ।
अचिरोपनतां स मेदिनीं
नवपाणिग्रहणां वधूमिव ॥ १० ॥

---

a. Raghuvaṁśa.

१. ना°–S₁. २. °णयी°–M. ३. °दा–M. ४. °दा–M. ५. °ष्ट्रे–M.
६. °ति°–S₁. ७. °यते–S₁. ८. °भ्मा°–M.

मृदुव्यवहितं तेजो भोक्तुमर्थान् प्रकल्पयेत् ।
प्रदीपः स्नेहमादत्ते सदयाभ्यन्तरस्तथा ॥ ११ ॥

## ॥ आत्मरक्षापद्धतिः ॥ ३८ ॥

आत्मानं सर्वथा र[1]क्षेद्राजा रक्षेच्च मेदिनीम् ।
आत्ममूलमिदं सर्वमाहुर्हि विदुषो जनाः ॥ १ ॥

जीवतैव परो लोकः साध्यते यश्च सर्वदा ॥
आजीवतस्तथैवास्ति न राज्यं न परा गतिः ॥ २ ॥

रक्ष सर्वात्मनात्मानमात्मा सर्वस्य[2] भाजनम् ।
जीविते यत्नमातिष्ठ जीवन् भद्राणि पश्यति ॥ ३ ॥

राज्यं श्रीश्चैव भद्रं ते जीवमानस्य कल्पते ।
मृतस्य खलु कौन्तेय ! नैव राज्यं कुतः सुखम् ॥ ४ ॥

मृतः कीर्तिं न जानाति जीवन् कीर्तिं समश्नुते ।
मृतस्य कीर्तिर्मर्त्यस्य यथा माला गतायुषः ॥ ५ ॥

त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ ६ ॥

आत्मा[3]र्थं सन्ततिस्त्याज्या राज्यं रत्नं धनानि च ।
अपि सर्वं समुत्सृज्य रक्षेदात्मानमात्मना ॥ ७ ॥

न च कन्यामविदितां संस्पृशेदपरीक्षिताम् ।
विविधान् कुरुते योगान् कुशलाः खलु मानवाः ॥ ८ ॥

आजन्मविषसंभोगात् कन्या विषमयी कृता ।
स्पर्शोच्छ्वासादिभिर्हन्ति तस्यास्त्वेतत् परीक्षणम् ॥ ९ ॥

तद्धस्तकेशसंस्पर्शान्म्लायते पुष्पपल्लवैः ।
शय्यायां मत्कुणैर्वस्त्रैर्यूकाभिः स्नानवारिणा ।
जन्तुभिर्म्रियते ज्ञात्वा तामेवं दूरतस्त्यजेत् ॥ १० ॥

गत्वा तत्रान्तरं सम्यक् समनुज्ञाय तं जनम् ।
प्रविशेद्राजनायैव स्त्रीवृतोऽन्तःपुरं पुनः ॥ ११ ॥

१. राजन् रक्ष रक्ष च–M. २. °स्व°–S. ३. °र्थे°–M.



तत्र भुक्त्वा पुनः किञ्चित् तूर्यघोषैः प्रहर्षितः ।
संविशेच्च यथाकालमुत्तिष्ठेद्विगतश्रमः ॥ १२ ॥

एतद्वृत्तं समातिष्ठेदरोगः पृथिवीपतिः ।
अस्वस्थः सर्वमेवैतद् भृत्येषु विनियोजयेत् ॥ १३ ॥

## ॥ राज्यरक्षापद्धतिः ॥ ३९ ॥

रक्षितात्मा तु यो राजा रक्ष्यं चैवाभिरक्षति ।
गुणश्च तस्य वर्धन्ते सुखं च महदश्नुते ॥ १ ॥

मित्रामात्यं पुरं राष्ट्रं दण्डः कोशो महीपतिः ।
सप्तानां पञ्चसङ्घातो राज्यमित्युच्यते नृपः ॥ २ ॥

राज्यं हि सुमहत्तन्त्रं दुर्धरं ह्यकृतात्मभिः ।
न शक्यमृजुना वो[1]ढुमाघातस्थानमुल्बणम् ॥ ३ ॥

अमात्यः शूर एव स्याद् युद्धसम्पन्न एव च ।
तस्मादपि भयं राज्ञः पश्य राज्यस्य योजनाम् ॥ ४ ॥

आ[2]न्तरेभ्यः परान् रक्षेत् परेभ्यः पुनरन्तरान् ।
परान् परेभ्यः स्वान् स्वेभ्यः सर्वान् रक्षेत सर्वदा ॥ ५ ॥

जिघांसवः पापकामाः परस्वादायिनः शठाः ।
रक्षांस्यधिकृता नाम तेभ्यो रक्षेदिमाः प्रजाः ॥ ६ ॥

रा[3]ज्ञो यदा जनप[4]दे बहवो राजपुरुषाः ।
अ[5]नयेनोपवर्तन्ते तद्रा[6]ज्ञः किल्बिषं भ[7]वेत् ॥ ७ ॥

प्रत्याहर्तुमशक्यं स्याद् धनं चोरैर्हृतं यदि ।
स्वात् कोशात् तत् प्रदातव्यमशक्तेनोपजीविनाम् ॥ ८ ॥

स्त्रियः सपुरुषा मार्गं सर्वालङ्कारसंयुताः ।
निर्भयाः प्रतिपद्यन्ते यदा रक्षति भूमिपः ॥ ९ ॥

निवृत्य हि यथाकामं गृहद्वाराणि शेरते ।
मनुष्या रक्षिता राज्ञा समन्तादकुतोभयाः ॥ १० ॥

१. °ढुं ना°–M. २. अ°–M. ३. प्रा°–M. ४. दं°–M.
५. °या चो°–M. ६. त्रस्थः–M. ७. °जे°–M.

यदृच्छा कुरुते धर्मं प्रजा धर्मेण पालयन् ।
( हस्तौ हस्तं परिमुषेद् भिद्येरन् सर्वसेतवः ॥ )
दशवर्षसहस्राणि तस्य भुक्तं महत् फलम् ॥ ११ ॥

## ॥ कण्टकशोधनपद्धतिः ॥ ४० ॥

राज्योपघातं कुर्वीरन् ये पापा राजवल्लभाः ॥
एकैकशः समेतान् वा तान् दूष्यान् सम्प्रचक्षते ॥ १ ॥

दूष्यानुपांशु दण्डेन हन्याद्राजा विशङ्कितः ।
प्रदुष्य वा प्रकाशं वा लोकविद्वेषमागतान् ॥ २ ॥[b]

दण्ड्ये यः पातयेद्दण्डं दण्ड्यो यश्चाभिदण्ड्यते ।
कार्यकारणसिद्धार्थावुभौ तौ नावसीदतः ॥ ३ ॥[c]

राजभिर्धृतदण्डाश्च कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ॥ ४ ॥

वाणीष्विव स्रवन्तीषु वनेषूपवनेषु वा ।
स्वार्थाः स्वैरं तदीयेषु चेरुर्वेश्मस्विवाद्रिषु ॥ ५ ॥

राजा रहसि दूष्यं हि दर्शनायोपमन्त्रयेत् ।
गूढशस्त्रा विशेयुस्तं पश्चादासज्जिता नराः ॥ ६ ॥[d]

इत्यादि दूष्यान् सन्दूष्य प्रजानामभिवृद्धये ।
निनीषुः श्रियमुत्कर्षं राजा शल्यं समुद्धरेत् ॥ ७ ॥[e]

निःसर्पे बद्धसर्पे वा वस्तुं हि भवने सुखम् ।
दृष्टनष्टभुजङ्गे तु निद्रा दुःखेन गम्यते ॥ ८ ॥[f]

यस्मिन् महीं शासति कामिनीनां
निद्रां विहारार्धपथे गतानाम् ।
वातोऽपि नास्रंसयदंशुकानि
को लम्बयेदाभरणाय हस्तम् ॥ ९ ॥[g]

b. Kāmandaka. c. Rāmayaṇa. d. Kāmandaka.
e. Kāmandaka f. Pañcatantra. g. Kālidāsa.

१. °स्ते–$S_1$ २. °ष्विव°–M. ३. °स्त्र°–M. ४. राज्य°–M.
५. वाणिनीनां–$S_1$



## ॥ लोकरञ्जनपद्धतिः ॥ ४१ ॥

लोकरञ्जनमेवात्र राज्ञां धर्मः सनातनः ।
सत्यस्य रक्षणं चैव व्यवहारस्य चार्जवम् ॥ १ ॥

यथा हि गर्भिणी हित्वा स्वं प्रियं मनसोऽनुगम् ।
गर्भस्य हितमाधत्ते तथा राज्ञाप्यसंशयम् ॥ २ ॥

अप्रियं यस्य कुर्वीत भूयस्तस्य प्रियं वदेत् ।
अचिरेण प्रियः स स्यात् योऽप्रिये प्रियमाचरेत् ॥ ३ ॥

गुप्तात्मा स्यात् दुराधर्षः स्मितपूर्वाभिभाषिता ।
आभाषितश्च मधुरं प्रत्यभाषेत मानवः ॥ ४ ॥

वर्तितव्यं कुरुश्रेष्ठ तथा धर्मानुवर्तिना ।
स्वं प्रियं सम्परित्यज्य यद्यल्लोकहितं भवेत् ॥ ५ ॥

एकान्तेन हि सर्वेषां न शक्यं तात रोचितुम् ।
मित्रामित्रमथो मध्यं सर्वभूतेषु भारत ॥ ६ ॥

गोपायितारं दातारं धर्मनित्यमतन्द्रितम् ।
अकामद्वेषसंयुक्तमनुरज्यन्ति मानवाः ॥ ७ ॥

पर्जन्यमिव भूतानि महाद्रुममिवाण्डजाः ।
नराः समुपजीवन्ति नृपं सर्वार्थसाधकम् ॥ ८ ॥

## ॥ कीर्तिपद्धतिः ॥ ४२ ॥

कीर्तिरक्षणमादिष्टं कीर्तिर्हि परमं धनम् ।
नष्टकीर्तेर्मनुषस्य जीवितं निष्फलं स्मृतम् ॥ १ ॥

कीर्तिर्हि पुरुषं लोके सञ्जीवयति मातृवत् ।
अकीर्तिर्जीवितं हन्ति जीवतोऽपि शरीरिणः ॥ २ ॥

सुतलं चरणद्वन्द्वं पृथिवी जघनमण्डली ।
यत्कीर्तेर्मध्यमाकाशं सुमनोवासभूः शिरः ॥ ३ ॥

१. सम्यक्–$S_1$ २. त्या–$S_1$. ३. सर्वप्रिय°–$S_1$. ४. यः स्या°–M.
५. सह्यं तात°–M. ६. °षो°–M.

यावत्कीर्तिर्मनुष्यस्य लोके तिष्ठति शाश्वती ।
तावज्जीवति राजेन्द्र नष्टकीर्तिर्विनश्यति ॥ ४ ॥

कीर्तिमानश्नुते स्वर्गं नष्टकीर्तिर्विनश्यति ।
यावत्कीर्तिर्मनुष्यस्य लोके भाति यशस्करी ।[1]
तावत्पुण्यकृताँल्लोकान् अनन्तात् पुरुषोऽश्नुते ॥ ६ ॥

## ॥ अकीर्तिपद्धतिः ॥ ४३ ॥

यस्य कीर्तिं न जल्पन्ति मानवा महदद्भुताम् ।
राशिवर्धनमात्रं तु सैव स्त्री न पुनः पुमान् ॥ १ ॥

अकीर्तिः [2]कीर्त्यते यस्य लोके पूतस्य कस्यचित् ।
पतत्येवाधमा[3]न् लोकान् यावच्छब्दः प्रवर्तितः ॥ २ ॥

## ॥ राजचाटुपद्धतिः ॥ ४४ ॥

सरस्वती स्थिता वक्त्रे लक्ष्मीर्वक्षसि ते स्थिता ।
कीर्तिः किं [4]कोपिता राजन् येन देशान्तरं गता ॥ १ ॥

यदस्ति [5]तद्ददासीति नैतच्चित्रमवैम्यहम् ।
भयं स्वप्नेऽपि ते नास्ति तद्दत्तं द्विषतां कथम् ॥ २ ॥

किं कृतेन न यत्र त्वं यत्र त्वं किमसौ कलिः ।
कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥ ३ ॥

वित्तः परिभवास्वादम[6]र्थिनः सुलभं न तौ ।
देहीति येन वा नोक्त[7]मुक्तं त्वय्येव येन वा ॥ ४ ॥

अर्थिनां कृपणा दृष्टिस्त्वन्मुखे पतिता सकृत् ।
तदवस्था पुनर्देव नान्यस्य मुखमीक्षते ॥ ५ ॥

त्वयि दातरि पृथ्वीश रणे वितरणेऽपि च ।
पुनर्देहीति वचनं न प्रत्यर्थिनि नार्थिनि ॥ ६ ॥

१. °स्विनी–M. २. कथ्यते–M. ३. मा°–$S_1$. ४. कु–$S_1$.
५. य°–$S_1$. ६. मर्थत्वसुलभ°–$S_1$. ७. °क्तमुक्तं त्वय्येन–$S_1$.
८ भव दातारिभूमीश–$S_1$; तव–$S_2$.



सर्वज्ञ इति लोकोऽयं भवन्तं भाषते मृषा ।
पदमेकं न जानीषे वस्तु नास्तीति याचके ॥ ७ ॥

शोकोष्मलैररिस्त्रीणां निःश्वासपवनैर्घनैः ।
प्रवृद्धो प्रज्वलत्यद्य त्वत्प्रतापदवानलः ॥ ८ ॥

अहो चित्रं जगन्नाथ प्रतापाग्निरयं तव ।
वर्धते शत्रुनारीणां प्रबलैरश्रुवारिभिः ॥ ९ ॥

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघः समायाति गुणो याति दिगन्तरम् ॥ १० ॥

सर्वदा सर्वदो[1]ऽसीति मिथ्या त्वं कथ्यसे बुधैः ।
नारयो लेभिरे पृष्ठं न वक्षः परयोषितः ॥ ११ ॥

नृसिंह त्वां प्रपन्नानां योगक्षेमौ न दुर्लभौ ।
हिरण्यदानव्यापारप्रगल्भे करपल्लवे ॥ १२ ॥

यदाध्वरसमिद्धाऽग्निप्रसूता धूमवल्लरी ।
दिशां मुखेषु कुरुते कस्तूरीतिलकश्रियम् ॥ १३ ॥

उद्दण्डः परदण्डभैरव भवद्यात्रासु जैत्रश्रियो
हेतुः केतुरतीव सूर्यसरणिं भ्राम्यान्निवार्यस्त्वया ।
नो चेत्तत्पदसम्पुटस्फुटलसच्छार्दूलमुद्रां द्रव-
त्सारङ्कं शशिबिम्बमेष्यति तुलां त्वत्प्रेयसीनां मुखैः ॥ १४ ॥

नाक्षराणि पठता किमपाठि
विस्मृतः किमथवा पठितोऽपि ।
इत्थमर्थिजनसंशयदोला-
खेलनं खलु चकार नकारः ॥ १५ ॥

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद्बिभ्रदिमा स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥ १६ ॥

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम् ।

१. सर्वदातेति–$S_1$.

प्रकृतिसुभगास्ते ते भावा मदस्रुतिहेतवो
व्रजति पुरुषो यैरुन्मादं त एव तवाङ्कुशाः ॥ १७ ॥

इन्दौ निन्द्या चकोरैरसमयति निशाजागरः पुण्डरीकैः
भृङ्गैः शीधुन्यसङ्गः शरदि समधिका ग्लानिरिन्दीवरैश्च ।
भ्रूभङ्गे यस्य वैराकरयुवतिदृशामेकमेवोपमानः
पश्याम्यश्रान्तबाष्पप्रकरमयझरीगूढचाराश्रमर्यः ॥ १८ ॥

चमूरेणुस्तोमं चतुरुदधिमुद्रिधयमृषिं
पुरो मत्वा विन्ध्यः परिणमति पातालत इति ।
तुरुष्कास्त्वच्छङ्कां विजहति.........
दुपानीतो नैताननधिगतवन्तो यदुपते ॥ १९ ॥

त्वत्प्राङ्गणे सुन्दरपाण्ड्यदेव
मतङ्गजाः शृङ्खलिनो विभान्ति ।
आवासदानादरिभूपतीना-
माशान्तशैला इव सापराधाः २० ॥

अक्षराणामकारोऽहमिति विष्णुः स्वयं वदन् ।
भवता सोऽपि यत्सत्यमाकारेण लघुकृतः ॥ २१ ॥

ऊढा खड्गलता श्यामा त्वया मातङ्गदारिका ।
अत एव भवान्मन्ये दूरं परिहृतः परैः ॥ २२ ॥

श्रीमन्नर्जुनभूपाल धरामुद्धरति त्वयि ।
हरः करोतु हारं वा कङ्कणं वा फणीश्वरम् ॥ २३ ॥

अक्ष्णोराहवराम किञ्चिदरुणे कोणे तवार्णयिसा
क्रोधेन द्विषतां पुरं यदभवद्घोरं तदाकर्ण्यताम् ।
दीव्यद्व्यालि दरिद्रिकोलि विदलत्कङ्केलि रिङ्खद्गुलि
क्रीडत्कालि रणत्कपालि विहरद्भूतालिवेतालि च ॥ २४ ॥

किं छत्रैरुपशोभते मृगपतिः किं भैरवः साम्बरः ।
किं नन्दी न तृणाङ्कुराञ्चितमुखः किं नो मरुद्धावति ।
चालुक्येश्वर विष्णुदेव भवतः प्रत्यर्थिपृथ्वीभुजो ।
ह्रीमुद्रामपसारयन्ति रहसि प्रौढावरोधस्त्रियः ॥ २५ ॥



सुतलं चरणद्वन्द्वं पृथ्वी जघनमण्डलम् ।
यत्कीर्तेर्मध्यमाकाशं सुमनोवासभूः शिरः ॥ २६ ॥

द्वारं वेत्रलताकुलं बहिरपि प्रक्लिन्नगण्डैर्गजै-
रन्तः कञ्चुकिभिः स्फुरन्मणिधरैरध्यासिता भूमयः ।
आक्रान्तं महिषीभिरेव शयनं त्वद्विद्विषां मन्दिरे
राजन् सैव चिरन्तना प्रणयिनी शून्येऽपि राज्यस्थितिः ॥ २७ ॥

वर्षापायपलायमानजलदच्छेदावकाशस्फुर-
न्मुक्तादन्तुरमन्तरीक्षमभितः क्षोणीभृदेणीदृशः ।
पश्यन्त्यो निशि राजसूर्यनयनैर्धारालबाष्पाम्बुभि-
स्त्वत्प्रस्थानविरोधिनं प्रसुवते भूयो नवां प्रावृषम् ॥ २८ ॥

राजन् राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे भोजय मां कुमार सचिवैर्नाद्यापि किं भुज्यते ।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवलभावेकैकमाभाषते ॥ २९ ॥

त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घ्य यान्ति द्विषः
कम्पन्ते सह सैनिकैस्त्वदरयस्त्वद्भूर्मनाक्कम्पते ।
ते देवीपतयस्त्वदस्त्रनिहतास्त्वं मानुषीणां पतिः
निन्दा तेषु कथं त्वयि स्तुतिपदं श्रीकर्ण निर्णीयताम् ॥ ३० ॥

राजानः शशिभास्करान्वयभुवः के के न सञ्जज्ञिरे
भर्तारं पुनरेकमेव हि भुवस्त्वां कर्ण मन्यामहे ।
येनाङ्गं परिमृज्य कुन्तलमथाकृष्य व्युदस्यायतं
चोलं प्राप्य च मध्यदेशमसकृत्काञ्च्यां करः प्रापितः ॥ ३१ ॥

त्वद्धाटीघोरघोटीखुरदलितधरापांसुभिर्मांसलेऽस्मि-
न्वृत्ते नष्टान्यभूते त्रिभुवनविवरे तिक्कणक्षोणिपाल ।
तेजस्त्वद्बाहुदण्डे मरुदपसरतां पादयोः पार्थिवानां
पाथस्तद्धाम नेत्रे परिणमति नमस्तन्निरालम्बतायाम् ॥ ३२ ॥

पादः कूर्मोऽस्य यष्टिर्भुजगपरिवृढो भाजनं भूतधात्री
तैलापूराः समुद्राः कनकगिरिरयं वृत्तवर्त्तिप्ररोहः ।
अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना
शत्रुश्रेणीपतङ्गा ज्वलति रघुपते त्वत्प्रतापप्रदीपः ॥ ३३ ॥

कोलाङ्कोऽभून्मृगाङ्को न वसति कमले श्रीरतिः श्रीवराहः
प्रातो नैषा प्रियस्योरसि रतिविरतौ लग्नगण्डं प्रसुता ।
इत्यालापे सखीनामुषसि सकुतुकं सत्रपं सानुतापं
पाणिभ्यां त्वद्रिपुस्त्री गणपतिनृपते गण्डपालिं विधत्ते ॥ ३४ ॥

कालिन्दी ब्रूहि कुम्भोद्भव जलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे नर्मदाहं त्वमपि वदसि मे नाम कस्मात्सपत्न्याः ।
मालिन्यं तर्हि कस्मादनुभवसि मिलत्कज्जलैर्मालवीनां
नेत्राम्भोभिः किमासं समजनि कुपितः कुन्तलक्षोणिपालः ॥ ३५ ॥

त्वां कश्चिच्चित्रकारो मनुम नरपते स्यन्दनारूढमेकं
स्नेहादालिख्य पाणावपि च शरवरं चारुकोदण्डकाण्डम् ।
यन्तारं कं लिखामीत्यवददथ मया प्रोक्तमम्भोरुहाक्षं
देवं ध्यात्वा विरिञ्चं व्यलिखदनुपदं चित्रकं दीघिमाङ्कः ॥ ३६ ॥

गर्जित्वा बहुदूरमुन्नतिभृतो मुञ्चन्ति वार्यम्बुदा
भद्रस्यापि गजस्य दानसमये सञ्जायते दुर्मतिः ।
पुष्पाडम्बरयापने न ददति प्रायः फलानि द्रुमा
नोत्सेको न मदो न कालहरणं दानप्रवृत्तस्य ते ॥ ३७ ॥

पृथुरसि गुणैः कीर्त्या रामो नलो हरतो भवान्
महति समरे शत्रुघ्नस्त्वं क्षितौ जनकस्थितिः[1] ।
इति सुचरितैर्बिभ्रत्साम्यं चिरन्तनभूभृतां
कथमसि न मान्धातेव त्वं त्रिलोकविजय्यपि ॥ ३८ ॥

कुर्वन्गङ्गाम्भसां क्षोभं तव [2]निःसाणनिस्वनः ।
स्नातीवारिवधूवर्गगर्भपातनपातकी ॥ ३९ ॥

मुञ्चति मुञ्चति कोशं
भजति च भजति प्रकम्पमरिवर्गः ।
अर्जुनदेवकृपाणे
त्यजति त्यजति क्षमामाशु ॥ ४० ॥

आपन्न एव पात्रं
देहीत्युच्चारणमेव वैदुष्यम् ।

१. जनकः स्थितः–$S_1$ २. निःसाल–$S_1$.



यदुपनतमेव देयं
[1]त्यागस्ते [2]तिक्कभूप किं [3]वर्ण्यः ॥ ४१ ॥

सन्त्यश्वाः सन्ति भटाः
सन्ति गजा भूभृतामिति ब्रूत ।
तिक्कक्षितिपादन्यं
त्यागिनमुक्त्वा न पातके पतत ॥ ४२ ॥

यो विधिरलिखदवित्तं
लिखति सवित्तेषु रामनाथस्तम् ।
विधिलिखितं न तु लिखितं
लिखितं लिखितं तु रामनाथस्य ॥ ४३ ॥

वन्यो हस्ती स्फटिकघटिते भित्तिभागे स्वबिम्बं
दृष्ट्वा दोषान्प्रतिगज इति त्वद्विषां मन्दिरेषु ।
हत्वा वेगाद्दलितवदनस्तत्पुनर्वीक्ष्य बिम्बं
मन्दं मन्दं स्पृशति करिणीशङ्कया साहसाङ्क ॥ ४४ ॥

त्वत्कीर्तिप्रचये चमूद्वहसुधामिश्रे कथं श्रेयसां
कन्दे कुन्दमृणालकोमलरुचामुद्वेलमुद्वेल्लति ।
जाता दुग्धवदब्धयः स्मितरुचः पश्यामि न श्यामिकां
कण्ठे नास्ति च कालिमा वपुषि च श्रीकण्ठवैकुण्ठयोः ॥ ४५ ॥

चित्रं कम्पणभूभुजा प्रकटितो दीपः प्रतापात्मक-
[4]स्सप्ताम्भोनिधिपात्र[5]वर्तनपरो निःस्नेहवर्त्युज्ज्वलः ।
प्राचण्ड्यं प्रतिपक्षपार्थिवकुलप्राणानिलैः प्रापित-
स्तत्कान्ता जननेत्रकज्जलरुचिं दूरीकरोतु ध्रुवम् ॥ ४६ ॥

त्वद्दोर्दण्डमहीधरात्समुदयच्छत्रं तमः संहरन्
पद्मोल्लासकरः प्रतापतरणिः श्रीकम्पणक्ष्मापते ।
शत्रुस्त्रीनयनोत्पलानि सततं संकोचयन् साञ्जली-
नच्छत्रानपहाय चित्रमुपरिच्छत्रान्परान्बाधते ॥ ४७ ॥

राजानः कति वा न सन्ति भुवने किं तैर्न ते कम्पणो
यद्बाहुं समुपाश्रिता वसुमती भूयस्तरां मोदते।

१. प्रा–$S_1$ २ विष्णुभूप–$S_1$ ३. पुण्यम्–$S_1$; पुण्यः–S.
५. सम्प्राप्रो– $S_1$. २ °व°, $S_1$.

दिग्दन्तावलशेषमूर्धसु कुलक्ष्माभृत्सु हित्वा पदम्
मातङ्गाङ्गविजिह्मकाङ्क्षत्दूषतां स्पर्शादिवोद्वेजिता ॥ ४८ ॥

कोणेशोपि महाजिरे नयनयोः कोपेन सन्नह्यते
श्रीमन्कम्पणभूप तादृशगुणं त्रैलोक्यमालोक्यते ।
शत्रूणां रुधिरैर्मही खगकुलोत्क्षिप्तैस्तदस्त्रैर्वियत्-
तत्पाणिग्रहतत्परामरवधूहर्षाश्रुभिर्द्यौरपि ॥ ४९ ॥

आकल्पं जयतामखण्डविभवो भाण्डानि नारायणः
खड्गाकम्पनतो रिपुक्षितिभृतामाकम्पनः कम्पनः ।
तारामौक्तिकदाम यस्य विततं कीर्त्यातपत्रं मुहुः
स्वर्णक्ष्माधरदण्डमुज्ज्वलतरं धत्ते फणिग्रामणीः ॥ ५० ॥

भो भानो भण वारिधे भजसि किं पूर्वापरौ पर्वतौ
सप्तोर्वी.................सर्वतः ।
शत्रुः संनिहि...............द्वारं नहीरङ्गते
पुत्रास्तत्र मनुह्वदिकरे......कर्णश्च खड्गोऽन्तकः ॥ ५१ ॥

वर्षन्त्यम्बु निपीय शम्बरनिधेः कम्पण्णपृथ्वीपते
शैलेष्वाशु पयोधराः पुनरिदं चित्रं समुद्राधिपः ।
त्वां स्मृत्वैव पयोधरेषु विसृजत्यश्रान्तमश्रूण्यपि
स्थित्वा शैलतटीष्वरिक्षितिभुजां कान्ताम्बुदाः साम्प्रतम् ॥ ५२ ॥

आयुष्मन्नर्थिपद्मप्रकरदिनपते कम्पणक्षोणिपाल
प्रागुद्भूते प्रतापे तव सपदि परं वैरिनारीजनस्य ।
हारास्ताराविलासः शशधररुचयः कज्जलं ध्वान्तरेखा
चेताश्चण्डांशुकान्तः सितमपि कुमुदं किं च शोकः सरोजम् ॥ ५३ ॥

श्रीमन्कम्पणभूप दिक्करिकराकारानुकारौ करौ
वर्धेतां जयिनोर्ययोर्विरचिते ज्याघातरेखा तव ।
दोरालाननिकामबद्धवपुषः पूर्वापराब्धीश्वर-
श्रीबन्धोर्जयसिन्धुरस्य मदवार्लेखेव गण्डच्युता ॥ ५४ ॥

देवेन्द्रान्मनुजेन्द्र एष जयति श्रीकम्पपृथ्वीपतिः
यद्भीत्या क्षितिभृद्गणस्य विशतः स्थानप्रदानादिव ।
यः शत्रुक्षतजैः प्रपूर्य जलधीनर्धेषु तेषामसौ
भीतिं वाडववह्निना कवलनभ्रान्त्या करोतीति यत् ॥ ५५ ॥



विभान्ति ते कम्पण वैरिभूपाः
करस्थकालायसशृङ्खलाभिः ।
अनित्यलक्ष्मीपरिणीतिहेतो-
रिवागतैः कौतुकसूत्रबन्धैः ॥ ५६ ॥

त्रयस्त्रिंशत्कोट्या दिवि परिणते देवनिवहे
भवत्खड्गो देव त्रिदशकरणोपायनिपुणः ।
विधत्ते स्वर्योषिद्वरणमहितान्देव निवहा-
नपूर्वांस्त्वज्जन्येष्वनुकलमहो कम्पण नृप ॥ ५७ ॥

कम्पक्षितीशमनिशं कथयन्ति सन्तः
सङ्गीतदुग्धजलधेरुदितं सुधांशुम् ।
साहित्यमानससरोवरराजहंसं
सङ्ग्रामरङ्गनटनस्थितिसूत्रधारम् ॥ ५८ ॥

*जित्वा यत्र पुरत्रयं सरथिको धन्वी न्यधात्साधनं
सर्वं कम्पमहीप निश्चिनुमहे त्वय्येव देवश्चिरात् ।
सूतं चेतनया तुरङ्गनिकरं वाचा रथाङ्गे रुचा
चापं धीरतया भुजेन च गुणं बाणं प्रतापेन च ॥ ५९ ॥

जातस्त्वं शशिनः कुलात्सजलधेरित्यन्वयात्तद्गुणा
दृश्यन्ते त्वयि यादवक्षितिपते श्रीरङ्गनाथप्रभो ।
मर्यादास्थितिरन्तरच्युतधृती लक्ष्म्याः समुन्मीलनं
गाम्भीर्यं गुरुसत्त्वता क्षितिभृतां रक्षा च पक्षस्पृशाम् ॥ ६० ॥

## ॥ पुरोहितपद्धतिः ॥ ४५ ॥

त्रय्यां च दण्डनीत्यां च शान्तिकर्माणि पौष्टिके ।
आथर्वणेऽपि कुशलः सम्यग्राजपुरोहितः ॥ १ ॥

यदेको ब्राह्मणो विद्वान् कुर्यात्कार्यं नृपस्य यत् ।
अक्षौहिणी न शक्नोति कर्तुं वर्षशतैरपि ॥ २ ॥

अक्षौहिणी[1] रिपुं हन्यात् स्वयं वा तेन हन्यते ।
ब्राह्मणो मन्त्रविद्धन्यात् सर्वानेव रिपून् क्षणात् ॥ ३ ॥

* from Saṅgraha only.
१ धारि° –$S_1$.

वेदवेदाङ्गतत्त्वज्ञो जपहोमपरायणः ।
आशीर्वादरतो नित्यमेष राजपुरोहितः ॥ ४ ॥

अलभ्यलाभाय च लब्धवृद्धये
यथार्हतीर्थप्रतिपादनाय च ।
यशस्विनं वेदविदं विपश्चितं
बहुश्रुतं ब्राह्मणमेव सत्यम् ॥ ५ ॥

## ॥ दुष्पुरोहितपद्धतिः ॥ ४६ ॥

यो धूल्यक्षरवीक्षणं न कृतवान्स्वप्नेऽपि नाधीतवान्
वेदं कश्चन शास्त्रपाठपदवीगन्धं च नाघ्रातवान् ।
विस्मृत्यापि च काव्यनाटकपथं न स्पृष्टवान् कष्टधी-
र्हा कष्टं विधिचेष्टितं क्षितिपतेः कोऽप्येष शिक्षागुरुः ॥ १ ॥

## ॥ द्वाःस्थपद्धतिः ॥ ४७ ॥

कोटिसारोऽपि सन् द्वाःस्थस्ताम्बूलमपि लिप्सते ।
अन्यत्र राज्ञः सर्वस्माद् राज्ञो हि न गृहं बहिः ॥ १ ॥

## ॥ वैद्यपद्धतिः ॥ ४८ ॥

हेतौ लिङ्गे प्रशमने रोगाणामपुनर्भवे ।
ज्ञानं चतुर्विधं यस्य स राजार्हो भिषक्तरः ॥ १ ॥

अनाथान् रोगिणो यश्च पुत्रवत् परिपालयेत् ।
गुरुणा समनुज्ञातः स भिषक्छब्दमश्नुते ॥ २ ॥

यथा कञ्चुकमामुञ्चन् नरो[1] हन्ति रणे रिपून् ।
भिषक्कञ्चुकितो राजा तथा हन्त्यखिला रुजः ॥ ३ ॥

व्याधेस्तत्त्वपरिज्ञानं वेदनायाश्च निग्रहः ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ ४ ॥

राजा राजगृहासन्ने प्राणाचार्यं निवेशयेत् ।
सर्वथा स भवत्येव सर्वत्र प्रतिजागृभिः ॥ ५ ॥

१. रणे–$S_1$; वीरो–SRH ( Subhāṣitaratnahāra )



अभेद्योऽनुद्धतः स्तब्धः सूनृतः प्रियदर्शनः ।
बहुश्रुतः कालवेदी जितग्रन्थोऽर्थकर्मवित् ॥ ६ ॥

आयुर्वेदकृताभ्यासः सर्वज्ञः प्रियदर्शनः ।
अर्थशीलगुणोपेत एष वैद्यो विधीयते ॥ ७ ॥

सर्वस्वमेव परमं प्राणा येषां कृते प्रयत्नोऽयम् ।
वैद्या वैद्याः सततं येषां हस्ते स्थितास्तेऽपि ॥ ८ ॥

## ॥ असद्वैद्यपद्धतिः ॥ ४९ ॥

अज्ञातशास्त्रसद्भावाञ्छास्त्रमात्रपरायणान् ।
त्यजेद् दूराद् भिषक्पाशान् घूको वैवस्वतानिव ॥ १ ॥

यमः क्रूरो भिषक् क्रूरो यमात् क्रूरतरो भिषक् ।
यमस्ते हरते प्राणान् वैद्यः सर्ववसून्यसून् ॥ २ ॥

आतुराद्वित्तहरणं मृताच्च प्रपलायनम् ।
एतद्वैद्यस्य वैद्यत्वं न वैद्यः प्रभुरायुषः ॥ ३ ॥

वैद्यनाथ ! नमस्तुभ्यं मारिताशेषमानव ! ।
त्वयि विन्यस्तभारो यत् कृतान्तः सुखमेधते ॥ ४ ॥

नटोऽपि दद्याद् गणिका च दद्या-
    दभ्यर्थितः पाशुपतोऽपि दद्यात् ।
वैद्यः कथं दास्यति याचकेभ्यो
    यो कर्तुकामादपि हर्तुकामः ॥ ५ ॥

दृष्ट्वा रवौ सरसिजं कुमुदं हिमांशौ
    नीलाम्बुवा[1]हनिबिडे गगने शिखी च ।
प्रायस्तथा नहि भजन्ति विकासलक्ष्मीं
    व्याधौ यथा धनवतां भिषजां मुखानि ॥ ६ ॥

मूर्धानं प्रथमं विधूय तदनु ध्यात्वा चिरं मौनवा-
नाहारं प्रथमं निरुध्य रुचिराननन्यान् विशेषानपि ।
क्वाथैः कर्षितकायमातुरनरं तैलं घृतं पाचयन्
हृत्वा दक्षिणया वसु व्यसु[2]ममुं त्यक्त्वा भिषग् धावति ॥ ७ ॥

१ °निव° –$S_1$.   २ य° –$S_1$.

यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ।
स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम् ॥ ८ ॥

यः पुनः कुरुते कर्म धाष्टर्याच्छास्त्रार्थवर्जितः ।
सत्सु गर्हामवाप्नोति वधमिच्छति राजतः ॥ ९ ॥

चिकित्सका वै दुष्टा ये लोभमोहसमन्विताः ।
अद्य ते व्रणकुष्ठैश्च श्वित्ररोगार्शसंयुताः ॥ १० ॥

गृध्री गृध्रं पृच्छति पितृवनमध्ये न दृश्यते धूमः ।
मन्ये सम्प्रति वैद्योऽप्यन्यग्रामं गतो नूनम् ॥ ११ ॥

शास्त्राण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स विद्वान् ।
सञ्चिन्त्यतामौषधमातुरं च
किं नाम मन्त्रेण करोत्यरोगम् ॥ १२ ॥

कृषीवलानां भुवि कालवर्षादकालवर्षाद् भिषजां प्रमोदः ।
यत् सस्यवृद्धिं कुरुते हि पूर्वं प्रजासु रोगप्रचयं द्वितीयम् ॥ १३ ॥

## ॥ कविप्रशंसापद्धतिः ॥ ५० ॥

कविः प्रसूते काव्यानि हृदा दधति सज्जनाः ।
सूते मुक्ताः पयोराशिः वहन्ति तरुणीस्तनाः ॥ १ ॥

सन्ति श्वान इवासंख्या जातिभाजो गृहे गृहे ।
उत्पादका न बहवः कवयः शरभा इव ॥ २ ॥[h]

ते वन्द्यास्ते महात्मानः तेषां लोके स्थिरं यशः ।
यैर्निर्मलानि काव्यानि ये वा लोकेषु कीर्तिताः ॥ ३ ॥

निरूप्यमेव न क्षेप्यं सूरिभिः सुकवेर्वचः ।
रत्नाकारमुपादाय काचः स्यान्न कदाचन ॥ ४ ॥

नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः ।
विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुर्लभम् ॥ ५ ॥[h]

निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसान्द्रासु मञ्जरीष्विव जायते ॥ ६ ॥[h]

h Bāṇa.



पदवीं कालिदासस्य ललितां मृदुलैः पदैः ।
न शक्नुवन्त्यहो गन्तुं पश्यन्तोऽपि कवीश्वराः ॥ ७ ॥

उच्छ्वासोऽपि न निर्याति बाणे हृदयवर्तिनि ।
किं पुनर्विकटाटोपपदबन्धा सरस्वती ॥ ८ ॥

अपि नानाकवीन्द्राणां जिह्वापल्लवशायिनी ।
जहात्यद्यापि नो वाणी बाणस्य विरहव्यथाम् ॥ ८ ॥

## ॥ कुकविनिन्दापद्धतिः ॥ ५१ ॥

नाकवित्वमधर्माय मृतये दण्डनाय वा ।
कुकवित्वं पुनः साक्षान्मृतिमाहुर्मनीषिणः ॥ १ ॥[i]

कुकवेः कविचोरस्तु वरं यः सुजनान् स्वया ।
नोद्विजयेद्दुरुक्त्या च सूक्त्या चास्य प्रहर्षयेत् ॥ २ ॥

खलैर्हि योज्यते दोषैरपदोषापि भारती ।
यैर्विमर्शपदे क्षिता वह्निशुद्धापि मैथिली ॥ ३ ॥

गणयन्ति नापशब्दं वृत्तभङ्गं क्षयं च नार्थस्य ।
रसिकत्वेनाकुलिता वेश्यापतयश्च कवयश्च ॥ ४ ॥

कुविद्वांश्च[1] .........श्च राजा लोकोऽर्थितस्मृतः ।
अप्रबुद्धतया कुर्यान्नर[2]......भृशम् ॥ ५ ॥

कविः पिता पोषकस्तु पाठको रसिकः पतिः ।
कविता दयिता नूनं सोदरास्त्वविवेकिनः ॥ ६ ॥

## ॥ काव्यप्रशंसापद्धतिः ॥ ५२ ॥

मधु स्वादु भृशं स्वादु मधुनोऽपि निशामुखम् ।
प्रियामुखादपि स्वादु सूक्तं सूक्तान्न किञ्चन ॥ १ ॥

आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् ।
तेषामसन्निधानेऽपि न स्वयं पश्य नश्यति ॥ २ ॥[j]

i. Bhāmaha. j. Daṇḍin.
१. Lacuna २. Lacuna.

वेश्यानामिव विद्यानां बहवः सन्ति भोगिनः ।
हृदयग्राहिणस्तासां विरलाः सन्ति वा न वा ॥ ३ ॥

दुर्जनहुताशतप्तं काव्यसुवर्णं विशुद्धिमुपयाति ।
दर्शयितव्यं तस्मान्मत्सरमनसः प्रयत्नेन ॥ ४ ॥[k]

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम् ।[१]
यत्तत् प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु ॥ ५ ॥[l]

त एवाक्षरविन्यासास्ता एव पदपङ्क्तयः ।
पुंसि पुंसि विशेषेण कापि कापि सरस्वती ॥ ६ ॥[m]

चेतःशुक्तिकया निपीय शतशः शास्त्रामृतानि क्रमात्
वान्तैरक्षरमूर्तिभिः सुकविता मुक्ताफलैर्गुम्फिता ।
उन्मीलत्कमनीयनायकगुणग्रामोपसंवर्णन-
प्रौढालङ्कृतयो लुठन्ति विदुषां कण्ठेषु हारस्रजः ॥ ७ ॥

निर्ह्रादं क्रकचक्षतैः किरति किं कर्णामृतं वल्लकी
किं वा मुञ्चति मालती परिमलं पाषाणनिष्पेषणैः ।
इत्थं नीरसतर्ककर्कशधियां जल्पैर्विकल्पाकुलै-
राकूतं कमनीयकान्तिदमिदं काव्यं कथं स्पन्दते ॥ ८ ॥

## ॥ अन्तरङ्गनिन्दापद्धतिः[1] ॥ ५३ ॥

यं यं गुणानुरागेण राजा नयति मुख्यताम् ।
तस्य तस्योपघाताय यतन्ते राजवल्लभाः ॥ १ ॥[n]

आयुक्तकेभ्यश्चोरेभ्यः परेभ्यो राजवल्लभात् ।
पृथिवीपतिलोभाच्च नराणां पञ्चधा भयम् ॥ २ ॥

राज्योपघातं कुर्वन्ति ये पापा राजवल्लभाः ।
एकैकशः समेता वा तान् दूष्यान् संप्रचक्षते ॥ ३ ॥[n]

दूष्यानुपांशु दण्डेन हन्याद्राजाऽविलम्बितम् ।
प्रदूष्यं वा प्रकाशं वा लोकविद्वेषमागतान् ॥ ४ ॥[n]

k. Sbhg. l. Ānandavardhana. m. Sbhg. n. Kāmandaka.
१. Lacuna after this verse. 1. no title in M.



अन्तरङ्गा हि ये राज्ञः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥ ५ ॥[n]

न बालिशा न च क्षुद्रा नाप्राज्ञा नाजितेन्द्रियाः ।
नाकुलीना जनाः पार्श्वे स्थाप्या राज्ञो हितैषिणा ॥ ६ ॥[n]

द्वेष्योऽपि संमतः शिष्टस्तस्यार्तस्य यथौषधम् ।
त्याज्यो दुष्टः प्रियोऽप्यासीदङ्गुलीवोरगक्षता ॥ ७ ॥[o]

असन्तुष्टोऽच्युतः स्थानान्मानात् प्रत्यवरोपिताः ।
स्वयं चोपहता भृत्या ये चाप्युपहताः परैः ॥ ८ ॥

परिक्षीणाश्च लुब्धाश्च क्रुद्धा भाराभितापिताः ।
हृतस्वा मानिनो ये च त्यक्तोपात्ता महेप्सवः ॥ ९ ॥

संलालिताश्च ये केचिद्व्यसनौघप्रतीक्षिणः ।
अन्तर्हितास्तूपहिताः सर्वे ते परसाधनाः ॥ १० ॥

इन्द्रियाण्यन्तरङ्गाणि पातयन्ति जनान् बहून् ।
अभ्यन्तरास्तथा राष्ट्रे भृत्याः स्वार्थपरायणाः ॥ ११ ॥

रिक्ताः कर्मणि पटवस्तृप्तास्त्वलसा भवन्ति ये भृत्याः ।
तेषां जलौकसामिव पूर्णानां रिक्तता कार्या ॥ १२ ॥

धनं राज्यं पुत्रदारान् समृद्धिं
सर्वं लुब्धाः प्रार्थयन्ते परेषाम् ।
लुब्धे दोषाः सम्पतन्तीह सर्वे
तस्माद्राजा न प्रगृह्णीत लुब्धान् ॥ १३ ॥

## ॥ पुत्रपद्धतिः ॥ ५४ ॥

इह वा तारयेत् पुत्र उत वा प्रेत्य तारयेत् ।
सर्वथा तारयेत् पुत्र आत्मा वै पुत्र उच्यते ॥ १ ॥

भार्यायां जनितं पुत्रमादर्शे स्वमिवाननम् ।
जनिताह्लादते प्रेक्ष्य स्वर्गं प्राप्येव पुण्यकृत् ॥ २ ॥[p]

n. Kāmandaka. o. Kālidāsa. p. Mahābhārata.

नास्ति पुत्रसमो बन्धुर्नास्ति पुत्रसमं धनम् ।
नास्ति पुत्रसमा प्रीतिर्नास्ति पुत्रसमा गतिः ॥ ३ ॥

जीवतो वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् ।
गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥ ४ ॥

गर्भक्लेशः स्त्रिया मन्ये सफलो भविता तदा ।
यदा स विजयी वा स्यात् सङ्ग्रामे वा हतः सुतः ॥ ५ ॥

कोऽर्थोऽस्ति बहुभिः पुत्रैर्गणनापूरणात्मकैः ।
वरमेकः कुलालम्बी यत्र विश्रमते कुलम् ॥ ६ ॥

एकेनापि सुपुत्रेण विद्यायुक्तेन धीमता ।
कुलं पुरुषसिंहेन चंद्रेणेव प्रकाश्यते ॥ ७ ॥[q]

दिग्वाससं गतव्रीडं जटिलं धूलिधूसरम् ।
पुण्याधिका हि पश्यन्ति गङ्गाधरमिवात्मजम् ॥ ८ ॥[r]

हितेन गुरुणा पित्रा कृतज्ञेन नृपेण वा ।
वियुज्यमानो विस्रब्धः किं न कुर्यामहं प्रियम् ॥ ९ ॥

विनीताः श्रुतसम्पन्नाः शास्त्रेषु च कृतश्रमाः ।
गजाश्वारोहणे दक्षा लभ्यन्ते सुकृतैः सुताः ॥ १० ॥[s]

किं मृष्टं सुतवचनं पुनरपि मृष्टं तदेव सुतवचनम् ।
मृष्टादपि मृष्टतरं सुतपरिपक्वं तदेव सुतवचनम् ॥ ११ ॥[t]

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन् ।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति ॥ १२ ॥[u]

## ॥ असत्पुत्रपद्धतिः ॥ ५५ ॥

राजपुत्रा मदोन्मत्ता गजा इव निरङ्कुशाः ।
भ्रातरं वापि निघ्नन्ति पितरं वापि मानिनः ॥ १ ॥[v]

q. Pañcatantra. r. Vallabhadeva. s. Manu.
t. Kalāvilāsa. u. Kālidāsa. v. Kāmandaka.



प्रजात्मरक्षणे राजा कुर्वीतात्मजरक्षणम् ।
लोलुभ्यमानास्तेऽर्थेषु हन्युरेवमलक्षिताः ॥ २ ॥[v]

राजपुत्रैर्मदोन्मत्तैः प्रार्थ्यमानमितस्ततः ।
दुःखेन लभ्यते राज्यं व्याघ्राघ्रातमिवामिषम् ॥ ३ ॥[v]

रक्ष्यमाणा यदि च्छिद्रं कथञ्चित् प्राप्नुवन्ति ते ।
सिंहा इवाशु तं घ्नन्ति रक्षितारं न संशयः ॥ ४ ॥[w]

तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥ ५ ॥[x]

राजपुत्रः परित्यागं सुदुर्वृत्तोऽपि नार्हति ।
क्लिश्यमानः स पितरं परमाश्रित्य हन्ति हि ॥ ६ ॥[y]

पितॄन् भ्रातॄनपि घ्नन्ति प्राप्तराज्या नृपात्मजाः ।
राजलक्ष्मीर्हि मोहाय क्षत्रियाणां दुरात्मनाम् ॥ ७ ॥

रञ्जयन्ति प्रजाः प्राज्ञा मन्त्रिभिर्नृपसूनवः ।
प्राप्तराज्याः पुनर्घ्नन्ति बन्धूनपि विरोधिनः ॥ ८ ॥

माने तपसि शौर्ये वा यस्य न प्रथितं यशः ।
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ॥ ९ ॥

यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता ।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥ १० ॥[z]

## ॥ भ्रातृपद्धतिः ॥ ५६ ॥

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥ १ ॥

सङ्घातवान् यथा वेणुर्निबद्धः कण्टकैर्वृतः ।
न शक्यते परिच्छेत्तुं भ्रातृसङ्घातवांस्तथा ॥ २ ॥

v. Kāmandaka. w. Kāmandaka. x. Pañcatantra.
y. Kauṭilya. z. Pañcatantra.
१. बल°–M.

स्वभूमौ च वसेत् सर्वः परभूमौ न सञ्चरेत् ।
न च बाह्येन संसर्गं कश्चिदाभ्यन्तरो व्रजेत् ॥ ३ ॥

अणुरप्युपहन्ति विग्रहः प्रभुमन्तः प्रकृतिप्रकोपजः ।
अखिलं हि हिनस्ति भूधरं तरुशाखान्तरघर्षजोऽनलः ॥ ४ ॥[a]

महौजसो मानधना धनार्चिता
धनुर्भृतः संयति लब्धकीर्तयः ।
न संहतास्तस्य न भेदवृत्तयः
प्रियाणि वाञ्छन्त्यसुभिः समीहितुम् ॥ ५ ॥[a]

अप्राज्ञेन च कातरेण च गुणः स्यात् सानुरागेण किं ।
प्रज्ञाविक्रमशालिनोऽपि हि भवेत् किं भक्तिहीनात् फलम् ।
प्रज्ञाविक्रमभक्तयः समुदिता येषां गुणा भूतये
ते भृत्याः नृपतेः कलत्रमितरे सम्पत्सु चापत्सु च ॥ ६ ॥[b]

## ॥ असद्भ्रातृपद्धतिः ॥ ५७ ॥

ईदृशं व्यसनं प्राप्तं भ्रातरं यः परित्यजेत् ।
को नाम संभवेत् तस्य यमेष न परित्यजेत् ॥ १ ॥

सौहृदेन परित्यक्तं निःस्नेहं खलवत् त्यजेत् ।
सोदर्यं भ्रातरमपि किमुतान्यं पृथग्जनम् ॥ २ ॥

भवन्ति भेदाज्ज्ञातीनां कलहाश्च महामते ।
प्रसक्तानि च वैराणि ज्ञातिधर्मो न नश्यति ॥ ३ ॥

संभाव्यं गोषु संपन्नं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं स्त्रीषु चापल्यं संभाव्यं ज्ञातितो भयम् ॥ ४ ॥

न वा जिघांसामि चरेमि यन्मा-
मयं महात्मा मतिमानुवाच ।
तस्यैव तद्भ्रामवचोऽनुरूप-
मिदं पुनः कर्म च मेऽनुरूपम् ॥ ५ ॥

a. Bhāravi. b. Mudrārākṣasa.
१. नृ°– $S_1$.



एकामिषप्रभवमेव सहोदराणा-
मुज्जृम्भते जगति वैरमिति प्रसिद्धम् ।
पृथ्वीनिमित्तमभवत् कुरुपाण्डवानां
तीव्रस्तथाहि भुवनक्षयकृद्विरोधः ॥ ६ ॥

## ॥ सद्भृत्यपद्धतिः ॥ ५८ ॥

प्रख्यातवंशिनं दान्तं लोकसङ्ग्रहिणं शुचिम् ।
कुर्वीतात्महिताकाङ्क्षी परिवारं महीपतिः ॥ १ ॥

क्रूरोऽपि योग्यतामेति परिवारगुणैर्वृतः ।
न क्रूरपरिवारस्तु व्यालाकान्त इव द्रुमः ॥ २ ॥

क्षमी दाता गुणग्राही स्वामी दुःखेन लभ्यते ।
अनुकूलः शुचिर्दक्षो राजन् भृत्योऽपि दुर्लभः ॥ ३ ॥

## ॥ असद्भृत्यपद्धतिः ॥ ५९ ॥

कुभृत्यो दुरुपानच्च प्राप्यापि स्नेहसत्क्रियाम् ।
स्वामिनः पदभङ्गाय स्वकाठिन्येन कल्पते ॥ १ ॥

अलसं दुर्मुखं स्तब्धं क्रूरं व्यसनिनं शठम् ।
असन्तुष्टमभक्तं च त्यजेद् भृत्यं नराधिपः ॥ २ ॥

लघून्यपि न सिद्ध्यन्ति भृत्यैः कार्याणि दुर्भृतैः ।
न च सिक्ताः फलं वृक्षा दधते छिन्नपल्लवाः ॥ ३ ॥[c]

गुरुर्ज्यौतिषिको वाणः किमेकः स्तम्भमूलकः ।
प्रेषितप्रेषकश्चैव षडेते सेवकाधमाः ॥ ४ ॥

वाक्यं तु यो नाद्रियते तु शिष्टः
प्रत्याह्वयं चापि नियुज्यमानः ।
आत्माभिमानी प्रतिकूलवादी
त्याज्यः स तादृक्त्वरयैव भृत्यः ॥ ५ ॥[d]

c. Mahābhārata. d. Vallabhadeva.
१. ° नृपः–$S_1$ २. संस्क्रिया°–$S^2$; विक्रियाम्–$S_1$

## ॥ विश्वासपद्धतिः ॥ ६० ॥

प्रज्ञाशौर्यातिवृद्धेषु वृद्धेष्वशठबुद्धिषु ।
स्वामी विश्वासनिद्रालुः पाताय न च पार्यते ॥ १ ॥

गुणयुक्ते तथैतस्मिन्विश्वसेच्च विचक्षणः ।
सर्वार्थसाधको राजा कुलजाते बहुश्रुते ॥ २ ॥

## ॥ अविश्वासपद्धतिः ॥ ६१ ॥

कृत[1]वैरे न विश्वासः कार्यस्त्विह सुहृद्यपि ।
प्रच्छन्नं तिष्ठते वैरं गूढोऽग्निरिव दारुणि ॥ १ ॥

नास्ति वैरमतिक्रान्तं सन्त्वितोऽस्मीति नाश्वसेत् ।
विश्वासाद्धन्यते लोकस्तस्माच्छ्रेयो ह्यदर्शनम् ॥ २ ॥

शत्रुसाधारणे कृत्ये कृत्वा सन्धिं बलीयसा ।
समाहितश्चरेन्नित्यं कृतार्थश्च न विश्वसेत् ॥ ३ ॥

सपत्न[2]संहिते राज्ञि कृत्वा सन्धिं न विश्वसेत् ।
अपक्रामेत् ततः क्षिप्रं कृतकार्यो विचक्षणः ॥ ४ ॥

न जातु बलवान् भूत्वा दुर्बलान् विश्वसेद् बुधः ।
भारुण्ड[3]सदृशा ह्येते निपतन्ति प्रमाद्यतः ॥ ५ ॥

अकालमृत्युर्विश्वासो विश्वसन् हि विपद्यते ।
यस्मिन् करोत्यविश्वासं स जीवत्यपरो मृतः ॥ ६ ॥

विश्वासयेत् परांश्चैव विश्वसेच्च न कश्चन ।
पुत्रेष्वपि च राजेन्द्र विश्वासो न प्रशस्यते ॥ ७ ॥[e]

अशङ्क्यमपि शङ्केत नित्यं शङ्केत शङ्कितान् ।
भयं ह्यशङ्किताज्जातं समूलमपि कृन्तति ॥ ८ ॥[f]

स्त्रीषु राजसु सर्पेषु स्वाध्याये शत्रुसेविषु ।
भोगे चायुषि विश्वासं कः पुमान् कर्तुमर्हति ॥ ९ ॥

१. °ते पापे–M. २. °मि°–M. ३. °सहिता°–M.
e. Mahābhārata. f. Pañcatantra.



योऽरिणा सह सन्धाय विश्वस्तः स्थातुमिच्छति ।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते ॥ १० ॥[g]

न जातु गच्छेद्विश्वासं सहितोऽपि हि बुद्धिमान् ।
अद्रोहसमयं कृत्वा वृत्रमिन्द्रः पुरावधीत् ॥ ११ ॥

विश्वसेदपि विश्वस्तं विश्वस्तं नातिविश्वसेत् ।
यस्मिन् विश्वासमायाति न भूतेः पात्रमेव सः ॥ १२ ॥[1]

न विश्वसेद्दुष्टभावमासन्नं शत्रुसेविनम् ।
स्त्रियं बालं च मूर्खं च नीचं चासत्प्रलापिनम् ॥ १३ ॥[h]

अपराधो न मेऽस्तीति नैतद् विश्वासकारणम् ।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि ॥ १४ ॥[i]

नखिनां च न[2]दीनां च शृङ्गिणां शस्त्रपाणिनाम् ।
विश्वासो नोपगन्तव्यः स्त्रीषु राजकुलेषु च ॥ १५ ॥

स्त्रियां धूर्तेऽलसे भीरौ षण्डे परुषवादिनि ।
चोरे न कार्यो विश्वासः कृतघ्ने चैव नास्तिके ॥ १६ ॥

एतच्छास्त्रार्थतत्त्वं तु मयाख्यातं तवानघ ।
अविश्वासो नरेन्द्राणामपरं गुह्यमुच्यते ॥ १७ ॥

## ॥ सूदनायकपद्धतिः ॥ ६२ ॥

असं[3]भेद्यः शुचिर्दक्षः कृतान्नस्य परीक्षकः ।
सूदानां च विशेषज्ञः सूदाध्यक्षो विधीयते ॥ १ ॥

## ॥ मन्त्रिपद्धतिः ॥ ६३ ॥

देशकाल[4]विभागज्ञा भर्तृकार्यहितैषिणः ।
दण्डनीतेः प्रयोक्तारः सचिवाः स्युर्महीपतेः ॥ १ ॥[j]

g. Manu. h. Manu; Cāṇakya-rājanīti.
i. Hitopadeśa. j. Mahābhārata.
१ न विश्वसेदविश्वस्तं विश्वस्तं नातिविश्वसेत् ।
यस्तु विश्वासमायाति न भूमेः पात्रमेव सः ॥ $S_1$.
२ शृङ्गिणां–$S_1$. ३. भोज्यः–$S_1$. ४. विभागज्ञः–M.;

कुलीनाः शुचयः शूराः श्रुतवन्तोऽनुरागिणः ।
दण्डनीतिप्रयोक्तारः सचिवास्तु महीपतेः ॥ २ ॥[k]

सन्धिविग्रहतत्त्वज्ञाः सततं प्रियवादिनः ।
प्राप्तकालं च ये दण्डं धारयेयुः सुतेष्वपि ॥ ३ ॥[l]

सहायसाध्यं राजत्वं चक्रमेतन्न वर्त्तते ।
कुर्वीत सचिवांस्तस्मात् तेषां च शृणुयान्मतम् ॥ ४ ॥

नीतिशास्त्रविदः शूरा मन्त्रिणो ब्राह्मणप्रियाः ।
ज्ञानवृद्धाः शास्त्रवृद्धाः धर्मे राज्ञः प्रवर्तकाः ॥ ५ ॥

रागमानमदान्धस्य स्खलतः पृथिवीपतेः ।
हस्तावलम्बो भवति सुहृत्सचिवचेष्टितम् ॥ ६ ॥

मन्त्रिभिर्मन्त्रकुशलैरन्धः पथि निषेव्यते ।
चक्षुष्माँस्तु मदान्धः सन् आत्मानं हन्त्यशेषतः ॥ ७ ॥

कृतप्रज्ञः सुमेधावी धीरो बुद्धो जितेन्द्रियः ।
सर्वकर्मसु संशुद्धः संशुद्धः श्रोतुमर्हति ॥ ८ ॥[m]

एको ह्यमात्यो मेधावी शूरो दान्तो विचक्षणः ।
राजानं राजपुत्रं वा प्रापयेन्महतीं श्रियम् ॥ ९ ॥[n]

स्वेच्छया कुरुते स्वामी यत् किंचन यतस्ततः ।
तत्तत्प्रतिचिकीर्षन्तो दुःखं जीवन्ति मन्त्रिणः ॥ १० ॥[o]

त्रिवर्गसाधकं यत् स्यात् द्वयोर्वैकस्य साधकम् ।
कार्यं तदपि कुर्वीत न त्वेवार्थं द्विबाधकम् ॥ ११ ॥[p]

अप्रियस्यापि पथ्यस्य परिणामः सुखावहः ।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र सम्पदः ॥ १२ ॥[q]

त्रिवर्गफलसंयुक्तानमात्यान् स्वेषु कर्मसु ।
न हि कुर्याद्यथाशौचमित्याचार्ये व्यवस्थितिः ॥ १३ ॥[r]

k. Rāmāyaṇa. l. Kauṭilya. m. Mahābhārata.
n. Kāmandaka. o. Mudrārākṣasa. p. Vātsyāyana.
q. Pañcatantra. r. Kauṭilya.



प्राज्ञे नियोजितेऽमात्ये सन्ति राज्ञस्त्रयो गुणाः ।
यशः स्वर्गनिवासश्च पुष्कलश्च धनागमः ॥ १४ ॥

यो हि धर्मं व्यपाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥ १५ ॥[s]

यस्मिन् वाचः प्रणश्यन्ति कूपे प्रास्ताः शिला इव ।
न वक्तारं पुनर्यान्ति स वै पण्डित उच्यते ॥ १६ ॥[t]

सुलभाः पुरुषा राजन् सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥ १७ ॥[u]

निश्चित्य यः प्रकुरुते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ १८ ॥

अपृष्टेन तु वक्तव्यं सचिवेन विपश्चिता ।
नानुशिष्यादपृच्छन्तं महदेतद्धि साहसम् ॥ १९ ॥

आयत्यां गुणदोषज्ञस्तदात्वे कृतनिश्चयः ।
अतीते कार्यशेषज्ञः शत्रुभिर्नाभिभूयते ॥ २० ॥

अहन्यहनि बोद्धव्यं किमत्र सुकृतं कृतम् ।
दत्तं वा दापितं वापि वाक्साह्यमपि वा कृतम् ॥ २१ ॥

मतिबलशालिनि मन्त्रिणि
लभते कां वा न सम्पदं स्वामी ।
रत्नावलीमुदयनो लेभे
यौगन्धरायणनयेन ॥ २२ ॥

अर्थं सप्रतिबन्धं प्रभुरधिगन्तुं सहायवानेव ।
प्रभवति तमसि न पश्यति दीपेन विना सचक्षुरपि ॥ २३ ॥[v]

विषमोऽपि विगाह्यते नयः
कृततीर्थः पयसामिवाशयः ।
स तु तत्र विशेषदुर्लभः
सदुपन्यस्यति कृत्यवर्म यः ॥ २४ ॥[w]

s. Rāmāyaṇa. t. Manu. u. Rāmāyana.
v. Mālavikāgnimitra. w. Bhāravi.

स किं सखा साधु न शास्ति योऽधिपं
हिताच्च यः संशृणुते स किं प्रभुः ।
सदानुकूलेषु हि कुर्वते रतिं
नृपेष्वमात्येषु च सर्वसम्पदः ॥ २५ ॥[w]

बहिः सर्वाकार[1]प्रवणरमणीयं व्यवहरन्
पराभ्यूहस्थानान्यपि तनुतराणि स्थगयति ।
जनं विद्वानेकः सकलमतिसन्धाय कपटै-
स्तटस्थः स्वानर्थान् घटयति च मौनं च भजते ॥ २६ ॥[x]

प्रायः पथ्यपराङ्मुखा विषयिणो भूपा भवन्त्यात्मनो
निर्दोषान् सचिवान् भजत्यतिमहान् लोकापवादो जनात् ।
वन्द्याः श्लाघ्यगुणास्त एव गुरवः सन्तोषभाजः परं
बाह्योऽयं वरमेव सेवकजनो धिक् सर्वथा मन्त्रिणः ॥ २७ ॥

## ॥ दुष्टमन्त्रिपद्धतिः ॥ ६४ ॥

मन्त्रिणः स्वार्थतात्पर्याद् दीर्घमिच्छन्ति विग्रहम् ।
तेषां तु भोज्यतामेति दीर्घकार्याकुलो नृपः ॥ १ ॥[x]

भीरवोऽनीतिशास्त्रज्ञाः कामुका ब्रह्मविद्विषः ।
अधर्मरुचयो लुब्धाः शत्रवो[2] नैव मन्त्रिणः ॥ २ ॥

अपथ्यस्य च भुक्तस्य दन्तस्य चलितस्य च ।
अमात्यस्य च दुष्टस्य समूलोद्धरणं सुखम् ॥ ३ ॥

गुणवानप्यसन्मन्त्री नृपतेर्नाभिगम्यते ।
प्रसन्नं स्वादुसलिलो दुष्टग्राह इव ह्रदः ॥ ४ ॥[y]

दुःखान्येव प्रसुवते निरुन्धन्ति सुखानि च ।
अयशांसि प्रयच्छन्ति भूपतीनां कुमन्त्रिणः ॥ ५ ॥[z]

हीनतेजा हि संपृष्टो नैव जातु व्यवस्यति ।
अवश्यं जनयत्येव सर्वकर्मसु संशयान् ॥ ६ ॥

w. Bhāravi. x. (Sbhg.) Mālatīmādhava.
x. Kāmandaka. y. Pañcatantra. z. Kauṭilya.
१. °रः प्रकृति°–M. २. शत्रवो नहि मन्त्रिणः–$S_1$.



एवमल्पश्रुतो मन्त्री कल्याणाभिजनोऽप्युत ।
धर्मार्थकामसंयुक्तं नालं मन्त्रं समीक्षितुम् ॥ ७ ॥

अनीतिकोविदं हिंस्रं दुर्बुद्धिमबहुश्रुतम् ।
त्यक्तोपात्तं मद्यपानद्यूतस्त्रीमृगयाप्रियम् ॥ ८ ॥

कार्ये महति युञ्जानो हीयतेऽर्थपतिः श्रिया ।
स्त्रीप्रधानानि राज्यानि विद्वद्भिर्वर्जितानि च ।
मूर्खामात्यप्रतप्तानि शुष्यन्ति जलबिन्दुवत् ॥ ९ ॥[a]

निरुन्धानाः सतां मार्गं भक्षयन्ति नृपश्रियम् ।
क्रूरात्मानस्तु सचिवास्तस्मात् सुसचिवो भवेत् ॥ १० ॥[b]

मूर्खे नियोजिताऽमात्ये त्रयो दोषा महीपतेः ।
अयशश्चार्थनाशश्च नरकश्च न संशयः ॥ ११ ॥

अहिते हि हिताकारं धाष्टर्याज्जल्पन्ति ये नराः ।
अवेक्ष्य मन्त्रबाह्यास्ते कर्तव्याः कृत्यदूषणाः ॥ १२ ॥[c]

गुणानामयथातथ्यादर्थं विप्लावयन्ति ये ।
अमात्यव्यञ्जना राज्ञा दूष्यास्ते शत्रुसंहिताः ॥ १३ ॥[3]

स दोषः सचिवस्यैव यदसत्कुरुते नृपः ।
याति यन्तुः प्रमादेन गजो व्यालत्ववाच्यताम् ॥ १४ ॥

न स्वल्पमल्पव्यवसायभीरोः करोति विज्ञानविधिर्गुणं हि ।
अन्धस्य किं हस्ततलस्थितोऽपि निर्वर्तयत्यर्थमिह प्रदीपः ॥ १५ ॥[d]

अभ्युच्छ्रिते मन्त्रिणि पार्थिवे वा
विष्टभ्य पादाववतिष्ठते श्रीः ।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति ॥ १६ ॥

दुर्मन्त्रिणं कमुपयन्ति न नीतिदोषाः
सन्तापयन्ति कमपथ्यभुजं न रोगाः ।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति ॥ १७ ॥[e]

a. Bṛhatsaṃhitā. b. Kāmakalā. c. Mahābhārata.
d. Māgha e. Pañcatantra.

एकं भूमिपतिः करोति सचिवं राज्ये प्रधानं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्विद्यते ।
निर्विण्णस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणानभिद्रुह्यति ॥ १८ ॥[e]

## ॥ बुद्धिप्रशंसापद्धतिः ॥ ६५ ॥

एकं हन्यात् न वा हन्यादिषुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राज्यं सराजकम् ॥ १ ॥

अपकृत्वा बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥ २ ॥

न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।
शेषं सम्प्रतिपत्तिस्तु बुद्धिमत्स्ववतिष्ठते ॥ ३ ॥[f]

शक्याशक्यपरिच्छेदं कुर्याद् बुद्ध्या प्रसन्नया ।
केवलं दन्तभङ्गाय दान्तिनः शैलताडनम् ॥ ४ ॥

प्रज्ञागुप्तशरीरस्य किं करिष्यन्ति सङ्गताः ।
गृहीतच्छत्रहस्तस्य वारिधारा इवारयः ॥ ५ ॥

कार्यमालोचितापायं मतिमद्भिर्विवेचितम् ।
न केवलं हि सम्पत्तौ विपत्तावपि शोभते ॥ ६ ॥[g]

नागामिनमनर्थं हि प्रतिघातशतैरपि ।
शक्नुवन्ति प्रतिव्योढुं ऋते बुद्धिबलान्नराः ॥ ७ ॥[h]

प्रज्ञया निर्मितैर्धीरास्तारयन्त्यबुधान् प्लवैः ।
नाबुधास्तारयन्त्यन्यानात्मानं वा कथञ्चन ॥ ८ ॥

शुश्रूषा श्रवणं चैव ग्रहणं धारणं तथा ।
ऊहापोहार्थविज्ञानं तत्त्वज्ञानं च धीगुणाः ॥ ९ ॥

श्रियः प्रसूते विपदो रुणद्धि यशांसि दुग्धे मलिनं प्रमार्ष्टि ।
संस्कारशौचेन परं पुनीता शुद्धा हि बुद्धिः किल कामधेनुः ॥ १० ॥[i]

e. Pañcatantra. f. Mahābhārata. g. Bhoja. h. Kāmandaka.
i. Viddhaśālabhañjikā ( Rājaśekhara ).



अश्वा नागाः स्यन्दनानां च संघा
मन्त्राः सिद्धा दैवतं चानुकूलम् ।
एतान्याहुः साधनानि स्म राज्ञां
येभ्यः श्रेयं बुद्धिरुत्कृष्यते मे ॥ ११ ॥[j]

शस्त्रैर्हता न रिपवोऽभिहता भवन्ति
प्रज्ञाहतास्तु पुरुषाः सुहता भवन्ति ।
शस्त्रं निहन्ति पुरुषस्य शरीरमेव
प्रज्ञा कुलं च विभवं च यशश्च हन्ति ॥ १२ ॥

यदपसरति मेषः कारणं तत् प्रहर्तुं
मृगपतिरपि रोषात् सङ्कुचत्युत्पतिष्यन् ।
हृदयनिहितवैरा गूढमन्त्रप्रचाराः
किमिव हि गणयन्तो बुद्धिमन्तः क्षमन्ते ॥ १३ ॥[k]

## ॥ मन्त्रप्रशंसापद्धतिः ॥ ६६ ॥

मन्त्रयेदिह मन्त्रज्ञो राजापि सह मन्त्रिभिः ।
मन्त्रार्थकुशलो राजा सुखं विजयमश्नुते ॥ १ ॥

अपश्चात्तापकृत् सम्यगनुबन्धिफलप्रदः ।
अदीर्घकालेऽभीष्टश्च मन्त्रः प्राशस्त्यमिष्यते ॥ २ ॥

आवर्तयन्मुहुर्मन्त्रं धारयेच्च प्रयत्नतः ।
अप्रयत्नधृतो मन्त्रः प्रचलन्नग्निवद् दहेत् ॥ ३ ॥

आतातसन्ततेर्मन्त्रं संरक्षेत् तत्परस्तु सः ।
अरक्ष्यमाणं मन्त्रं हि भिनत्त्याप्तपरम्पराम् ॥ ४ ॥

अम्भसा भिद्यते सेतुस्तथा मन्त्रोऽप्यरक्षितः ।
पैशुन्यात् भिद्यते स्नेहो वाग्भिर्भिद्येत कातरः ॥ ५ ॥

असंवृताकारतया भिन्नमन्त्रस्य भूपतेः ।
सकृच्छिद्रघटस्येव न तिष्ठत्युदयोदकम् ॥ ६ ॥

किं स्विच्छिद्रं भवेत् दोषः किंस्विद्धि विनिपातनम् ।
कुतो मम स्रवेद् दोष इति नित्यं विचिन्तयेत् ॥ ७ ॥

j. Pañcatantra. k. Vallabhadeva.

सततं गुप्तवाक्यस्य नित्यं गुप्तेन्द्रियाकृतेः ।
फलैर्ज्ञेयाः समारम्भाः पुण्यं पूर्वकृतं यथा ॥ ८ ॥

आत्मानं मन्त्रिणं सूतममात्यं वचनक्रमम् ।
आकारं ब्रुवते षड्ढमेतावान्मन्त्रनिश्चयः ॥ ९ ॥

एकं विषरसो हन्ति शस्त्रेणैकश्च वाध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविस्रवः ॥ १० ॥

यस्य मन्त्रं न जानन्ति समागम्य पृथग्जनाः ।
स कृत्स्नां पृथिवीं भुङ्क्ते कोशहीनोऽपि पार्थिवः ॥ ११ ॥

नासुहृत् परमं मन्त्रं भरतार्हति वेदितुम् ।
अपण्डितो वापि सुहृत् पण्डितो वाप्यनात्मवान् ॥ १२ ॥

मन्त्रमूलं यतो राज्यमतो राज्यं सुरक्षितम् ।
कुर्याद्यथास्य न विदुः कर्मणामाफलोदयम् ॥ १३ ॥

षट्कर्णो भिद्यते मन्त्रश्चतुष्कर्णस्तु वाध्यते ।
द्विकर्णस्य तु मन्त्रस्य ब्रह्माप्यन्तं न गच्छति ॥ १४ ॥[l]

निर्मन्त्रमेनं रिपवो यातुधाना इव क्रतुम् ।
समन्ततो विलुम्पन्ति तस्मान्मन्त्रपरो भवेत् ॥ १५ ॥[m]

समावायव्ययौ यत्र व्ययो यत्राधिको भवेत् ।
असाध्यं च शतोपायैः कथञ्चित् तन्न मन्त्रयेत् ॥ १६ ॥[n]

किं स्यात् परत्रेत्याशङ्का कार्ये यस्मिन्न विद्यते ।
न चार्थं च सुखं चेति शिष्टास्तस्मिन्नवस्थिताः ॥ १७ ॥[o]

[1]निष्फलं क्लेशबहुलम् सन्दिग्धफलमेव च ।
न कर्म कुर्यान्मतिमान् महावैरानुबन्धि च ॥ १८ ॥[p]

सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः ॥ १९ ॥[q]

मतिभेदतमस्तिरोहिते गहने कृत्यविधौ विवेकिनाम् ।
सुकृतः परिशुद्ध आगमः कुरुते दीप इवार्थदर्शनम् ॥ २० ॥[q]

l. Mahābhārata. m. Kāmandaka. n. Kauṭilya.
o. Mahābhārata. p. Pañcatantra. q. Bhāravi.
१. न° — $S_1$. २. को – $S_1$.



सर्वस्य कार्यस्य समुद्भवार्थ-
मागामिनोऽर्थस्य च सङ्ग्रहार्थम् ।
अनर्थकार्यप्रतिषेधनार्थं
यन्मन्त्र्यतेऽसौ परमो हि मन्त्रः ॥ २१ ॥[r]

भव्यमुख्याः समारम्भाः प्रत्यवेक्षा निरत्यया ।
गर्भशालि सधर्माणस्तस्य गूढं ...... ॥ २२ ॥

## ॥ मन्त्रदेशपद्धतिः ॥ ६७ ॥

निःस्तम्भे निर्गताक्षे च निर्भित्त्यन्तरसंश्रये ।
प्रासादाग्रेऽप्यरण्ये वा मन्त्रयेदविभावितः ॥ १ ॥[s]

## ॥ मन्त्रकालपद्धतिः ॥ ६८ ॥

मध्यन्दिनेऽर्धरात्रे च विश्रान्तो विगतक्लमः ।
चिन्तयेद्धर्मकामार्थान् सार्धं तैरेक एव वा ॥ १ ॥

जडान्धबधिरान् मूकान् तैर्यग्योन्यान्वयोधिकान् ।
तान् म्लेच्छव्याधितव्यङ्गान् मन्त्रकालेऽवसाययेत् ॥ २ ॥

## ॥ सामपद्धतिः ॥ ६९ ॥

कुलीनेषु कृतज्ञेषु सार्द्रचित्तेषु संयतः ।
कार्यार्थकुशलो विद्वान् पूर्वं साम प्रयोजयेत् ॥ १ ॥

साम्नैव सिद्धये विद्वान् यतते यतमानसः ।
समासिद्धिं प्रशंसन्ति सर्वसिद्धिषु पण्डिताः ॥ २ ॥[t]

प्रलिम्पन्निव तेजांसि दृष्ट्या साधु पिबन्निव ।
स्रवन्निवामृतं साधु प्रयुञ्जीत प्रियं वचः ॥ ३ ॥[u]

साम्नैव यत्र सिद्धिर्न तत्र दण्डो बुधेन विनियोज्यः ।
पित्तं यदि शर्करया शाम्यति कोऽर्थः पटोलेन ॥ ४ ॥[v]

r. Pañcatantra. s. Kauṭilya.
t. Kāmandaka. u. Cāṇakya. v. Vallabhadeva.

## ॥ भेदपद्धतिः ॥ ७० ॥

भेदं कुर्वीत यत्नेन मन्त्र्यमात्यपुरोधसाम् ।
तेषु भिन्नेषु भिन्नं हि युवराजे तथोर्जिते ॥ १ ॥

भयेन भेदयेद्भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थप्रदानेन संख्येनैव समौजसम् ॥ २ ॥

अमात्यो युवराजश्च भुजावेतौ महीपतेः ।
मन्त्री नेत्रं हि तद्भिन्न एकस्मिन्नपि तद्वधः ॥ ३ ॥

सर्वावस्थासु मेधावी तत्कुलीनं विकारयेत् ।
विकृतस्तत्कुलीनस्तु स्वयोनिं दहतेऽग्निवत् ॥ ४ ॥

मत्स्यो मत्स्यमुपादत्ते ज्ञातिर्ज्ञातिं न संशयः ।
रावणोच्छित्तये रामो विभीषणमपूजयत् ॥ ५ ॥[w]

## ॥ दानपद्धतिः ॥ ७१ ॥

दारुणं विग्रहं विद्वान् दानेन प्रशमं नयेत् ।
इन्द्रोऽपचारे शुक्रस्य दानेन वशमेयिवान् ॥ १ ॥

उपच्छन्द्यापि दातव्यं बलिने शान्तिमिच्छता ।
समूलमेव गान्धारिरप्रयच्छन् गतः क्षयम् ॥ २ ॥

## ॥ दण्डपद्धतिः ॥ ७२ ॥

सामादीनामुपायानां त्रयाणां विफले नये ।
विनयेन्नयसम्पन्नो रिपुं दण्डेन दण्डवित् ॥ २ ॥

## ॥ सन्धिपद्धतिः ॥ ७३ ॥

बलिना विगृहीतः सन् नृपोऽनन्यप्रतिक्रियः ।
आपन्नः सन्धिमन्विच्छेत्कुर्वाणः कालयापनम् ॥ १ ॥

प्रवृत्तचक्रेणाक्रान्तो राजा बलवतां बलम् ।
सन्धिनोपक्रमेत् तूर्णं कोशदण्डात्मभूमिभिः ॥ २ ॥[x]

w. Kāmandaka. x. Pañcatantra.



सन्धिमिच्छेत्समेनापि सन्दिग्धे विजये युधि ।
न हि सांशयिकं कुर्यादित्युवाच बृहस्पतिः ॥ ३ ॥

सगुप्तिमाधाय सुसंहितेन
बलेन धीरोऽपि चरन्नरातिम् ।
सन्तापयेद्येन सुसम्प्रतप्त-
स्तप्तेन सन्धानमुपैति तप्तम् ॥ ४ ॥

आसम्प्रवृद्धेरपि वृद्धिकामः
समेन सन्धानमिहोपगच्छेत् ।
अपक्वयोर्वा घटयोरवश्य-
मन्योन्यभेदी समसंनिपातः ॥ ५ ॥

## ॥ सन्धेयपद्धतिः ॥ ७४ ॥

सत्यार्यौ धार्मिकानार्यौ भ्रातृसङ्घातवान्[1]बली ।
अनेकविजयी चेति सन्धेयाः सप्त कीर्तिताः ॥ १ ॥[y]

सत्यवन्तो जितक्रोधाः बलवन्तो रणप्रियाः ।
क्षान्तिशीलगुणोपेताः सन्धेयाः पुरुषोत्तमाः ॥ २ ॥[z]

## ॥ असन्धेयपद्धतिः ॥ ७५ ॥

बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः ।
भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ १ ॥

विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान् ।
अनेकचित्रमन्त्रश्च देवब्राह्मणनिन्दकः ॥ २ ॥

दैवोपहतकश्चैव दैवचिन्तक एव च ।
दुर्भिक्षव्यसनोपेतो बलव्यसनसङ्कुलः ॥ ३ ॥

अदेशस्थो बहुरिपुर्युक्तोऽकालेन यश्च सः ।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ४ ॥

y. Kāmandaka. z. Mahābhārata.
१. °वत्सली–M.

एतैः सन्धिं न कुर्वीत विगृह्णीयात्तु केवलम् ।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ ५ ॥[a]

शत्रुणा नहि सन्दध्यात्संश्लिष्टेनान्तरात्मना ।
प्रतप्तमपि पानीयं शमयत्येव पावकम् ॥ ६ ॥[b]

## ॥ सन्धिनिन्दापद्धतिः ॥ ७६ ॥

वैरमादौ समासाद्य यः कश्चित्सन्धिमिच्छति ।
मृण्मयस्येव भग्नस्य तस्य सन्धिर्न विद्यते ॥ १ ॥

शपथेनाप्यरीन् हन्यान्न दोष इति भार्गवः ।
उभौ यदि शपेयातां श्रद्दधानस्तु बाध्यते ॥ २ ॥

सकृद् द्विष्टं तु योऽमित्रं पुनः सन्धातुमिच्छति ।
स मृत्युमुपगृह्णाति गर्भमश्वतरी यथा ॥ ३ ॥

न समयपरिरक्षणं क्षमं ते निकृतिपरेषु परेषु भूरिधाम्नः ।
अरिषु हि विजयार्थिनः क्षितीशा विदधति सोपधि सन्धिदूषणानि ॥४॥[c]

## ॥ दूतपद्धतिः ॥ ७७ ॥

कृतमन्त्रस्तु मन्त्रज्ञो मन्त्रिणं मन्त्रिसम्मतम् ।
यातव्याय प्रहिणुयात् दूतं दूत्याभिमानिनम् ॥ १ ॥

प्रगल्भः स्मृतिमान्वाग्मी शास्त्रे शस्त्रे च निश्चितः ।
अभ्यस्तकर्मा नृपतेर्दूतो भवितुमर्हति ॥ २ ॥

रागापरागौ जानीयाद् दृष्टिवक्त्रविचेष्टितैः ।
सहेतानिष्टवचनं कामं क्रोधं च वर्जयेत् ॥ ३ ॥

वध्यमानोऽपि न ब्रूयात्स्वस्वामिप्रकृतिच्युतिम् ।
ब्रूयात्प्रश्रितया वाचा सर्वं वेद भवानिति ॥ ४ ॥[d]

इङ्गिताकारचेष्टाभिः परचित्तप्रवेदिनः ।
आप्ताः सुशीघ्रगा दूता वाग्मिनो मितभाषिणः ॥ ५ ॥

a. Kāmandaka. b. Pañcatantra.
c. Bhāravi. d. Kāmandaka.



कुलीनः शीलसम्पन्नो वाग्मी दक्षः प्रियंवदः ।
यथोक्तवादी स्मृतिमान् दूतः स्यात् सप्तभिर्गुणैः ॥ ६ ॥[e]

कार्ये कर्मणि निर्दिष्टे यो बहूनपि साधयेत् ।
पूर्वकार्याविरोधेन स कार्यं कर्तुमर्हति ॥ ७ ॥

मत्तः प्रत्यवरः कश्चिन्नास्ति सुग्रीवसन्निधौ ।
नहि प्रकृष्टाः प्रेष्यन्ते प्रेष्यन्ते हीतरे जनाः ॥ ८ ॥[f]

अस्तब्धमक्लीबमदीर्घसूत्रं सानुक्रोशं शक्तमसाध्यमन्यैः ।
अरोगजातीयमुदारवाक्यं दूतं वदन्त्यष्टगुणोपपन्नम् ॥ ९ ॥

रामो नाम स एव येन भगिनीनासावसापङ्किलः
खड्गस्ते खरदूषणत्रिशिरसां धौतः शिरःशोणितैः ।
बध्वा त्वां चतुरम्बुराशिषु परिभ्राम्यन् मुहूर्तेन यः
सन्ध्यामर्चयति स्म निस्त्रप कथं तातस्त्वया विस्मृतः ॥ १० ॥[g]

रे रे वानर को भवानहमरे त्वत्सूनुहन्ताहवे
दूतोऽहं खरखण्डनस्य जगतां कोदण्डदीक्षागुरोः ।
मद्दोर्दण्डकठोरताडनविधौ को वा त्रिकूटाचलः
को मेरुः क्व च रावणस्य गणना कोटिस्तु कीटायते ॥ ११ ॥[g]

## ॥ दुष्टदूतपद्धतिः ॥ ७८ ॥

भूताश्चार्था विपद्यन्ते देशकालविरोधिनः ।
विक्लवं दूतमासाद्य तमः सूर्योदये यथा ॥ १ ॥

अर्थानर्थान्तरे बुद्धिर्निश्चितापि न शोभते ।
घातयन्ति हि कार्याणि दूताः पण्डितमानिनः ॥ २ ॥[h]

## ॥ चारपद्धतिः ॥ ७९ ॥

तर्केङ्गितज्ञः स्मृतिमान् मृदुर्लघुपराक्रमः ।
क्लेशायाससहो दक्षः चारः स्यात्प्रतिपत्तिमान् ॥ १ ॥

e. Mahābhārata. f. Rāmāyaṇa. g. Mahānāṭaka.
h. Rāmāyaṇa.

तपस्विलिङ्गिनो धूर्ताः शिल्पवश्योपजीविनः ।
चाराश्चरेयुः परितः पिबन्तो जगतां मतम् ॥ २ ॥[i]

चारेण विदितः शत्रुः पण्डितैर्वसुधाधिपैः ।
युद्धेष्वल्पेन यत्नेन समासाद्य निरस्यते ॥ ३ ॥

सूक्ष्मसूत्रप्रचारेण पश्येद्वैरिविचेष्टितम् ।
स्वपन्नपि हि जागर्ति चारचक्षुर्महीपतिः ॥ ४ ॥

सर्वसम्पत्समुदयं सर्वावस्थाविचेष्टितम् ।
चारेण द्विषतां विद्यात् तद्देशप्रार्थनादिव ॥ ५ ॥

चारेण प्रचरेद्राजा सूत्रेणाग्निरिवाध्वरे ।
दूते सन्धानमायत्तं चारे चर्या प्रतिष्ठिता ॥ ६ ॥

परेषु स्वेषु चाक्षिप्तैरविज्ञातपरस्परैः ।
सोपसर्गैर्जजागार यथाकालं स्वपन्नपि ॥ ७ ॥

## ॥ वैरपद्धतिः ॥ ८० ॥

वैरं पञ्चसमुत्थानं बुध्यन्ते तच्च पण्डिताः ।
स्त्रीकृतं वास्तुजं वाग्जं स्वसपत्नापराधजम् ॥ १ ॥

न वित्तेन न पारुष्यान्न सत्वेन न च श्रुतात् ।
वैराग्निः शाम्यते राजन् वाडवाग्निरिवार्णवे ॥ २ ॥

न हि वैराग्निरुद्भूतः कर्म वाप्यपराजितम् ।
अदग्ध्वा शाम्यते नृणां विना ह्येकतरक्षयात् ॥ ३ ॥

जातवैरश्च पुरुषो दुःखं स्वपिति सर्वदा ।
अनिर्विण्णेन मनसा ससर्प इव वेश्मनि ॥ ४ ॥[j]

अन्योन्यकृतवैराणां वैरस्यान्तं विवित्सताम् ।
पुत्रपौत्रे विनष्टे तत् परलोकं च गच्छति ॥ ५ ॥[k]

दुःशासनामर्षरजोविकीर्णैरेभिर्विनाथैरिव भाग्यनाथैः ।
केशैः कदर्थीकृतवीर्यसारः कच्चित् स एवासि धनञ्जयस्त्वम् ॥ ६ ॥[l]

i. Kāmandaka.
j. Vallabhadeva. k. Mahābhārata. l. Bhāravi.



नास्ति वैजातिकः शत्रुः पुरुषस्य विशांपते ।
येन साधारणी वृत्तिः स शत्रुर्नेतरो जनः ॥ ७ ॥

## ॥ विग्रहपद्धतिः ॥८१॥

यदा मन्येत मतिमान् हृष्टपुष्टं स्वकं बलम् ।
देशकालबलोपेतः प्रारभेतैव विग्रहम् ॥ १ ॥

आत्मनोऽभ्युदयाकांक्षी पीड्यमानः परेण वा ।
देशकालबलोपेतः प्रारभेतैव विग्रहम् ॥ २ ॥

भूमिर्मित्रं हिरण्यं च विग्रहस्य त्रयं फलम् ।
यदैतन्नियतं भाति तदा विग्रहमाचरेत् ॥ ३ ॥[m]

## ॥ यानपद्धतिः ॥८२॥

उत्साहप्रभुशक्तिभ्यां मन्त्रशक्त्या च भारत ।
उपपन्नो नृपो यायाद् विपरीतमतोऽन्यथा ॥ १ ॥[n]

उत्कृष्टबलवीर्यस्य विजिगीषोर्जयैषिणः ।
गुणानुरक्तप्रकृतेर्यात्रा यानमिति स्मृतम् ॥ २ ॥[o]

उत्थानेनामृतं लब्धमुत्थानेनासुरा हताः ।
उत्थानेन महेन्द्रेण श्रैष्ठ्यं प्राप्तं दिवीह च ॥ ३ ॥[p]

आत्मानं च परं चैव वीक्ष्य धीरः समुत्पतेत् ।
एतदेव हि विज्ञानं यदात्मपरवेदनम् ॥ ४ ॥[q]

शरत्काले वसन्ते वा रिपोर्नाशेऽप्युपस्थिते ।
निमित्तं शकुनं लब्ध्वा यात्रां कुर्वीत भूपतिः ॥ ५ ॥[r]

पक्वसस्यापि पृथिवी भवत्यम्बुमती तदा ।
नैवातिशीतो नात्युष्णं कालो भवति भारत ॥ ६ ॥

उत वा तृणवान् मार्गः समो गम्यः प्रशस्यते ।
सुशोध्यस्त्रिविधं मार्गं षड्विधं च स्वकं बलम् ॥ ७ ॥

m. Kāmandaka n. Mahābhārata. o. Kāmandaka.
p. Mahābhārata. q. Kāmandaka. r. Manu.

साम्परायिककल्पेन यायादरिपुरं प्रति ।
अग्रतः शकटानीकमसिचर्मभृतां भवेत् ॥ ८ ॥

पृष्ठतश्चापि शकटं खनित्रं मध्यतस्तथा ।
तस्मात् तदाभियोगः स्यात् परेषां व्यसने तथा ॥ ९ ॥

यतो भवेद् भयाशङ्का ततो विस्तारयेत् बलम् ।
राष्ट्रं च पीडयेच्छत्रोः शस्त्राग्निविषमूर्छनैः ॥ १० ॥

वधेन च मनुष्याणां मार्गाणां दूषणेन च ।
आकाराणां विनाशैश्च परराष्ट्रं विनाशयेत् ॥ ११ ॥

उत्थानहीनः पुरुषो बलवानपि नित्यशः ।
सुधर्षणीयः शत्रूणां भुजङ्ग इव निर्विषः ॥ १२ ॥

अनुत्थानाद् भवेन्नाशः प्राप्तस्यानागतस्य च ।
प्राप्यते फलमुत्थानाल्लभते चार्थसम्पदम् ॥ १३ ॥[s]

रात्रावुलूकोऽपि निहन्ति काकं
काकोऽप्युलूकं रजनीव्यपाये ।
इति स्म कालं समुदीक्ष्य याया –
त्काले भवन्तीह समीहितानि ॥ १४ ॥[t]

## ॥ सुनिमित्तपद्धतिः ॥८३॥

निमित्तान्येव शंसन्ति शुभाशुभफलप्रदम् ।
तस्मादेतानि शास्त्रज्ञो राजा समुपलक्षयेत् ॥ १ ॥[u]

उदीर्णमनसो योधा वाहनानि च भारत ।
यस्या भवन्ति सेनाया ध्रुवं तस्या जयो भवेत् ॥ २ ॥

हृष्टा वाचस्तथा सत्या योधानां यत्र भारत ।
न म्लायन्ते स्रजश्चैव ते तरन्ति रणे रिपून् ॥ ३ ॥[v]

प्रशस्तेन निमित्तेन विशुद्धेनान्तरात्मना ।
व्यक्तमारभ्यमाणा हि सिद्धिं यान्ति महीक्षिताम् ॥ ४ ॥

s. Mahābhārata. ṭ. Kāmandakī. u. Manu.
v. Mahābhārata.



निमित्तलक्षणज्ञानं शकुनिस्वनदर्शनम् ।
अवश्यं सुखदुःखेषु नराणां प्रतिदृश्यते ॥ ५ ॥[w]

वामेतरविषाणाग्रवेष्टनेन करस्य च ।
बृंहितेन गजानां च जानीयाज्जयमञ्जसा ॥ ६ ॥[x]

## ॥ अनिमित्तपद्धतिः ॥८४॥

कबन्धः परिघाभासो दृश्यते भास्करान्तिकम् ।
जग्राह सूर्यं स्वर्भानुरपर्वणि महाग्रहः ॥ १ ॥

छत्रं नरपतेर्यस्य निपतेत्पृथिवीतले ।
स सराष्ट्रो नरपतिः क्षिप्रमेव विनश्यति ॥ २ ॥[y]

## ॥ आसनपद्धतिः ॥८५॥

परस्परविरोधेन क्षीयमाणेषु शत्रुषु ।
तद्विनाशो भवेद्यावत्तावत्तिष्ठेत बुद्धिमान् ॥ १ ॥[z]

तदासनं प्रशंसन्ति बुद्धिमन्तः क्षितीश्वराः ।
परवृद्धौ स्वहानौ च समिच्छन्तो हितं परम् ॥ २ ॥

## ॥ अभियुक्तप्रक्रियापद्धतिः ॥८६॥

यदा तु पीडितो राजा भवेद्राज्ञा बलीयसा ।
तदा त्वागत्य मित्राणि विधानमुपकल्पयेत् ॥ १ ॥[a]

घोषान् न्यसेत मार्गेषु ग्रामानुत्थापयेदपि ।
प्रवेशयेच्च तान् सर्वान् शाखानगरकेषु च ॥ २ ॥

नदीमार्गेषु च तथा सङ्क्रमानवसादयेत् ।
जलं निस्रावयेत् सर्वमनिस्राव्यं च दूषयेत् ॥ ३ ॥

कुलिङ्गद्वारकाणि स्युरुच्छ्वासार्थं कुलस्य ह ।
तेषां च द्वारवद् गुप्तिः कार्या सर्वात्मना भवेत् ॥ ४ ॥

w. Rāmāyaṇa. x. Mahābhārata.
y. Mahābhārata. z. Mānasollāsa. a. Kāmandaka.

द्वारेषु च गुरूण्येव यन्त्राणि स्थापयेत् सदा ।
आरोहयेच्छतघ्नीं च स्वाधीनांश्चाधिकारयेत् ॥ ५ ॥

काष्ठानि निर्हरेच्चैव तथा कूपांश्च खानयेत् ॥
संशोधयेत् तथा कूपान् कृतान् पूर्वं पयोऽर्थिभिः ॥ ६ ॥

तृणच्छन्नानि वेश्मानि पङ्केनाथ प्रलेपयेत् ॥
नक्तमेव च भक्तानि पाचयेत नराधिपः ।
न दिवाग्निर्ज्वलेद् गेहे वर्जयित्वाग्निहोत्रिणम् ॥ ७ ॥

भिक्षुकांश्च यतींश्चैव क्लीबोन्मत्तकुशीलवान् ।
बाह्यान् कुर्युर्नृपश्रेष्ठ दोषाय स्युर्हि ते शठाः ॥ ८ ॥

सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम् ।
आपदामथ काले तु कुर्वीत न विचालयेत् ॥ ९ ॥

अशक्नुवंश्च युद्धाय निष्पतेत् सह मन्त्रिभिः ।
कोशेन पौरैर्दण्डेन ये चान्ये सहकारिणः ॥ १० ॥

असम्भवे तु सर्वस्य यथा मुख्येन निष्पतेत् ।
अपचिक्रमिषुः पूर्वं सेनां स्वां परिसान्त्वयेत् ॥
विलङ्घयित्वा सत्रेण ततः स्वयमुपक्रमेत् ॥ ११ ॥

## ॥ द्वैधीभावपद्धतिः ॥८७॥

बलिनोर्द्विषतोर्मध्ये वाचात्मानं समर्पयन् ।
द्वैधीभावेन वर्तेत काकाक्षिवदलक्षितः ॥ १ ॥

## ॥ समाश्रयपद्धतिः ॥८८॥

यापयेद्यत्नमास्थाय संनिकृष्टमरिं द्वयोः ।
उभयोरपि सम्पाते सेवेत बलवत्तरम् ॥ १ ॥

स्वयं हीनबलो राजा जयहेतुं न पश्यति ।
बलिना पीड्यमानो यः क्षेमस्थानं समाश्रयेत् ॥ २ ॥



महता बलिना यस्तु पीडितोऽल्पबलो नृपः ।
तस्य सार्धं प्रतिज्ञाय तमेवाश्रयते नृपः ॥ ३ ॥

ददत् बलं वा कोशं वा भूतिं वा भूमिसम्भवाम् ।
युधिष्ठिर इवाप्नोति पुनर्जीवन् वसुन्धराम् ॥ ४ ॥[b]

तत्संश्रयोऽन्यसंसर्गो दुर्गसंश्रयणं तथा ।
इति भेदास्त्रयः प्रोक्ताश्चतुर्थो नोपपद्यते ॥ ५ ॥

## ॥ राजलेखकपद्धतिः ॥८९॥

सर्वदेशलिपिज्ञाने लिखिते कुशलः पटुः ।
अन्वितो वाचकैर्धीमान् ज्ञेयो राज्ञः स लेखकः ॥ १ ॥

सकृद्वाक्यगृहीतार्थो लघुहस्तो जिताक्षरः ।
मेधावी वाक्पटुः प्राज्ञः एष शासनलेखकः ॥ २ ॥

## ॥ कायस्थानिन्दापद्धतिः ॥९०॥

काकाल्लौल्यं यमात्क्रौर्यं स्थपतेर्दृढघातिताम् ।
आद्याक्षराणि सङ्गृह्य कायस्थः केन निर्मितः ॥ १ ॥[c]

कायस्थेनोदरस्थेन मातुरामिषशङ्कया ।
आन्त्राणि यन्न जग्धानि तस्य हेतुरदन्तता ॥ २ ॥

कायस्थस्य च शल्यस्य कायस्थस्य च का गतिः ।
आभ्यामनुप्रविष्टाभ्यां दूष्यन्ते सर्वधातवः ॥ ३ ॥[d]

विलेखनदशोद्गीर्णैः क्षरद्भिः शब्दगुम्फनैः ।
तीक्ष्णा गणकलेखिन्योऽप्यभ्यस्यन्तीव पैशुनम् ॥ ४ ॥

कठिनास्तीक्ष्णवक्त्राश्च तीक्ष्णोदर्कास्तथैव च ।
गणकैः किन्नु लेखिन्यस्ताभिस्ते किं नु शिक्षिताः ॥ ५ ॥

---

१. शत्रुणा–M. २. °क्ष्णा–M.

b. Kāmandaka. c. Mānasollāsa. d. Govindakavi.

अङ्गन्यासैर्विषमैर्मायावनितालकावलीकुटिलैः ।
को नाम कामचारैः कायस्थैर्मोहितो न जनः ॥ ६ ॥

मायाप्रपञ्चसञ्चयवञ्चितविश्वैर्विनाशितः सततम् ।
विषयग्रामग्रासैः कायस्थैरिन्द्रियैर्लोकः ॥ ७ ।

ज्ञाता संसारकला केनापि कृतप्रयत्नेन ।
अज्ञाता दिविरकला केनापि कृतप्रयत्नेन ॥ ८ ॥

कूटकलाशतशिबिरैः जनधनविवरैः क्षयक्षपातिमिरैः ।
शिखैरेव समस्तैर्ग्रस्ता जनता न कालेन ॥ ९ ॥

लेखकजातिरदुष्टा शीतो वह्निर्निरामयः कायः ।
भिषगपि च पथ्यकारी स्त्री च न दुष्टेत्यसंभाव्यम् ॥ १० ॥[1]

नरेश्वराणां नवरत्नमुक्ताशंखप्रवालस्थितिमाननन्तः ।
कायस्थनाम्ना वडवानलेन निपीयते कोशमयः समुद्रः ॥ ११ ॥

## ॥ गायकनिन्दापद्धतिः ॥९१॥

वर्जितसाधुद्विजवरविबुधायाः सकलकुटिलचरितायाः ।
शापोऽयमेव लक्ष्म्या गायनभोग्यैव या सततम् ॥ १ ॥

नष्टस्वरपदगीतैः क्षणेन लक्षाणि गायको लब्धा ।
दासीसुतेन दत्तं किमिति वदन् दुःखितो याति ॥ २ ॥

* न त्वीक्षते न वर्णं न वृत्तभङ्गं क्षयं न चार्थस्य ।
शापोऽयमेव लक्ष्म्या गायकभोग्यैव या सततम् ॥ ३ ॥

## ॥ स्वर्णकारनिन्दापद्धतिः ॥९२॥

मेरुः स्थितोऽपि दूरे मनुष्यभूमिं धिया परित्यज्य ।
भीतोऽवश्यं चौर्याच्चोराणां हेमकाराणाम् ॥ १ ॥[e]

सहसैव दूषयति यः स्पर्शेन सुवर्णमुपगतच्छायम् ।
नित्याशुचयः पापाश्चण्डाला हेमकाराश्च ॥ २ ॥

*from Saṅgraha only.
e. Kalāvilāsa.



अपि पञ्चशतं दण्ड्यान् दण्डयेत् पृथिवीपतिः ।
अथवा पञ्चकायस्थानेकं वा स्वर्णकारकम् ॥ ३ ॥[f]

## ॥ पिशुनपद्धतिः ॥९३॥

न सतां शीलमेतद्धि परिवादो न पैशुनम् ।
गुणानामेव वक्तारः सन्तो नित्यं युधिष्ठिर ॥ १ ॥

विषधरतोऽप्यतिविषमः खल इति न मृषा वदन्ति विद्वांसः ।
यदयं नकुलद्वेषी कुलविद्वेषी पुनः पिशुनः ॥ २ ॥[h]

खलजिह्वा च नौका च प्रतिकूलप्रवर्तिनि ।
प्रतारणाय लोकानां दारुणा केन निर्मिता ॥ ३ ॥

शुनां च पिशुनानां च प्रतिवेश्म प्रवेशिनाम् ।
प्रयोजनं न जानीमः पात्राणां दूषणादृते ॥ ४ ॥

विवृण्वती पुरस्तैक्ष्ण्यं पृष्ठतः कुर्वती गुणम् ।
कर्णान् विध्यति लोकस्य सूचिवत् सूचकस्य वाक् ॥ ५ ॥

पादाहतोऽपि दृढदण्डविघट्टितोऽपि
यं दंष्ट्रया स्पृशति तं विनिहन्ति सर्पाः ।
कोऽप्यन्य एष पिशुनो हि भुजङ्गधर्मा
कर्णे परं स्पृशति हन्त्यपरं समूलम् ॥ ६ ॥

## ॥ अधिकारिपद्धतिः ॥९४॥

यो यद्वस्तु विजानाति तं तत्र विनियोजयेत् ।
अशेषविषयप्राप्ताविन्द्रियार्थेष्विवेन्द्रियम् ॥ १ ॥

कुलशीलगुणोपेतः सत्यधर्मपरायणः ।
प्रवीणः प्रेषणे दक्षः राजाध्यक्षो विधीयते ॥ २ ॥[i]

f. Manu. g. Mahābhārata. h. Subandhu.
i. Kāmandaka.

यदप्यल्पतरं कर्म तदप्येकेन दुष्करम् ।
पुरुषेणासहायेन किमु राज्यं महोदयम् ॥ १७ ॥[u]

प्रार्थयेतैव मित्राणि सति वासति वा धने ।
नानर्थयन् विजानाति मित्राणां सारफल्गुताम् ॥ १८ ॥[v]

दर्शितानि कलत्राणि गृहे भुक्तमशङ्कितम् ।
कथितानि रहस्यानि सौहृदं किमतः परम् ॥ १९ ॥

अकिञ्चिदपि कुर्वाणः सौख्ये दुःखान्यपोहति ।
तत्तस्य किमपि द्रव्यं यो हि यस्य प्रियो जनः ॥ २० ॥[w]

शून्यमाकीर्णतामिति तुल्यं वलनमुत्सवैः ।
विप्रलम्भोऽपि लाभाय सति प्रियसमागमे ॥ २१ ॥

लभ्यमेकसुकृतेन दुस्त्यजा
रक्षितारमसुरक्ष्यभूतयः ।
स्वन्तमन्तविरसा जिगीषतां
मित्रलाभमनु लाभसम्पदः ॥ २२ ॥[x]

तदा रम्याण्यरण्यानि प्रियाः शल्यं तदासतः ।
तदैकाकी सबन्धुः सन्निष्टेन रहितो यदा ॥ २३ ॥[y]

विरहानलसन्तापे विरहच्छेदे प्रयोगनिकषे वा ।
अविकारकरं मित्रं सत्काश्चनवत् क्वचिद् भवति ॥ २४ ॥[z]

उपचारः कर्तव्यो यावदनुत्पन्नसौहृदो भवति ।
उत्पन्नसौहृदानामुपचारः कैतवं भवति ॥ २५ ॥

न तन्मित्रं यस्य कोपाद् बिभेति
यद्वा मित्रं कोपने नोपशक्यम् ।
यस्मिन्मित्रे पितरीवाश्वसीत
तद्वै मित्रं सङ्गतानीतराणि ॥ २६ ॥[a]

सुहृल्लघुः सार्थकरः समीपे
महाप्रभावो न तु विप्रकाष्टः ।

u. Chāṇakya. v. Mahābhārata.
w. Bhavabhūti. x. Bhāravi.
y. Bhāravi. z. Pañcatantra. a. Mahābhārata.
१. °दुर्लभा M.



करोति किं नाम भिषग् विषघ्नः
सर्पे शिरःस्थे शतयोजनस्थः ॥ २७ ॥

## ॥ अमित्रपद्धतिः ॥९७॥

वसेत्साहसपात्रेण क्रूरेणाशीविषेण वा ।
न तु मित्रप्रवादेन संवसेच्छत्रुसेविना ॥ १ ॥[b]

शत्रुसेविनि मित्रे च गूढैर्युक्ततरो भवेत् ।
गतप्रत्यागते चैव स हि कष्टतरो रिपुः ॥ २ ॥[c]

दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ।
विवर्जयेत मेधावी तस्मिन् मैत्री प्रणश्यति ॥ ३ ॥[d]

उपलिप्तेषु मूढेषु रौद्रसाहसिकेषु च
तथैवापेतधर्मेषु न मैत्रीमाचरेद् बुधः ॥ ४ ॥[e]

लोकयात्रा भयं लज्जा दाक्षिण्यं धर्मशीलता ।
पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र सङ्गतिम् ॥ ५ ॥

परोक्षे गुणहन्तारं प्रत्यक्षे प्रियवादिनम् ।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम् ॥ ६ ॥[f]

मित्रमपि याति रिपुतां स्वस्थानात्प्रच्युतस्य पुरुषस्य ।
कमलं जलादपेतं शोषयति रविर्न बोधयति ॥ ७ ॥[g]

महति विनष्टा प्रीतिर्यद्युपचारेण बहुगुणा भवति ।
च्छिन्ननिरूढेव लता पूर्वच्छायां न पूरयति ॥ ८ ॥[g]

नर्मान्तः परिहासो यावत् सत्क्रियमाणभद्रकत्वं च ।
स्मरणं च दुष्कृतानां त्रीणि कुमित्रस्य चिह्नानि ॥ ९ ॥[3]

## ॥ कोशसङ्ग्रहपद्धतिः ॥९८॥

न कोशः शुद्धभावेन नानृशंसेन जायते ।
मध्यमं पदमास्थाय कोशसङ्ग्रहणं चरेत् ॥ १ ॥

b. Rāmāyaṇa. c. Mahābhārata. d. Rāmāyaṇa,
e. Mahābhārata. f. Kauṭilya. g. Sundara Pāṇḍya.
१. ध्य–M.

यथा क्रमेण पुष्पेभ्यः चिनोति मधु षट्पदः ।
तथा द्रव्यमुपादाय राजा कुर्वीत सञ्चयम् ॥ २ ॥

कोशस्तु सर्वदा रक्ष्यो यत्नमास्थाय राजभिः ।
कोशमूला हि राजानः कोशवृद्धिपरो भव ॥ ३ ॥

धर्महेतोस्तथार्थाय भृत्यानां भरणाय च ।
आपदर्थं च संरक्ष्यः कोशः कोशवता सता ॥ ४ ॥[h]

अर्थानामार्जनं कार्यं आर्जितस्य च रक्षणम् ।
भुज्यमानो निरावापः क्षीयते हि महानपि ॥ ५ ॥[i]

कोपं कोशं भयं कामं व्यसनं देशविभ्रमम् ।
निग्रहानुग्रहौ राजा सर्वं तरति कोशवान् ॥ ६ ॥[j]

कोशादाश्रयणीयत्वामिति तस्यार्थसञ्चयः ।
अम्बुगर्भो हि जीमूतश्चातकैरभिनन्द्यते ॥ ७ ॥[k]
स्वसैन्यपोषः क्रियते धनेन धनेन धन्या धनमाप्नुवन्ति ।
धनं विना कामकथैव नास्ति राज्यस्य मूलं धनमेव नान्यत् ॥ ८ ॥

अग्निः स्तोको वर्धते चाज्यसिक्तो
बीजं चैकं बहुसाहस्रमेति ।
क्षयोदयौ विपुलौ संनियम्य
तस्मादल्पं नावमन्येत वित्तम् ॥ ९ ॥[l]

## ॥ कोशहानिपद्धतिः ॥९९॥

दुर्गस्य संस्कारकथैव नास्ति
रक्षा विलोपादपयाति सैन्यम् ।
पलायते शून्यकरस्य मित्रं
राज्येन किं कोशविवर्जितस्य ॥ १ ॥

कोशे वितीर्णे जनता नृपस्य
वृद्धस्य नारीव भवत्यवश्या ।
दरिद्रदेहोदरदीपदीप्ति-
रिव प्रयात्यल्पतरत्वमाज्ञा ॥ २ ॥

h. Kāmandaka. i. Mahābhārata. j. Manu.
k. Kālidāsa. l Kāmandaka.



विकत्थनैश्छन्दगृहीतचित्तै-
र्विटैर्वितण्डैः पिशुनैश्च डम्भैः ।
कायस्थसेनापतिगायनाद्यैः
कोशाः प्रणालैरिव निःसरन्ति ॥ ३ ॥[m]

## ॥ अर्थप्रशंसापद्धतिः ॥१००॥

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥ १ ॥[n]

ज्ञानवृद्धा वयोवृद्धा शीलवृद्धाश्च ये नराः ।
सर्वे ते धनवृद्धस्य द्वारि तिष्ठन्ति[१] किङ्कराः ॥ २ ॥[o]

अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।
इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ ३ ॥[p]

अर्थार्थी जीवलोकोऽयं ज्वलन्तमुपसर्पति ।
क्षीणक्षीरां निरालम्बां वत्सस्त्यजति मातरम् ॥ ४ ॥[q]

अर्थोपचयविज्ञानमस्ति यस्य स पण्डितः ।
सरः सलिलसम्पूर्णमाश्रयन्ति विहङ्गमाः ॥ ५ ॥

अधनेनार्थकामेन नार्थः शक्यो विवित्सता ।
अर्थैरर्था निबध्यन्ते गजैरिव महागजाः ॥ ६ ॥[r]

कार्यार्थी बन्धुजनः कार्यैर्बहुभिर्भवन्ति मित्राणि ।
दाराः सुताश्च सुलभा धनमेकं दुर्लभं लोके ॥ ७ ॥[s]

वित्तेन हीनं पुरुषं त्यजन्ति दाराश्च पुत्राश्च सहोदराश्च ।
तं वित्तवन्तं पुनरेव यान्ति वित्तं हि लोके पुरुषस्य बन्धुः ॥ ८ ॥

धनैर्दुष्कुलीनाः कुलीनाः क्रियन्ते
धनैनैव पापान्नरा निस्तरन्ति ।
धनेभ्यो न लोके सुहृत् कश्चिदन्यो
धनान्यर्जयध्वं[२] धनान्यर्जयध्वम् ॥ ९ ॥[t]

m. Kalāvilāsa. n. Rāmāyaṇa. o. Vyāsa.
p. Mahābhārata. q. Kāmandaka. r. Mahābhārata.
s. Kalāvilāsa. t. Kṣemendra.
१. °तिष्ठते–M. २. त्वं–M.

## ॥ अर्थनिन्दापद्धतिः ॥ १०१ ॥

अर्थानामार्जने दुःखमार्जितस्य च पालने ।
आये दुःखं व्यये दुःखं धिगर्थं दुःखभाजनम् ॥ १ ॥

राजतः सलिलादग्नेश्चोरतोऽर्थिजनादपि ।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव ॥ २ ॥[u]

पतन्ति खड्गधारासु विशन्ति मकरालयम् ।
किं न कुर्वन्ति सुभग कष्टमर्थार्थिनो नराः ॥ ३ ॥

यस्य धर्मार्थमर्थेहा तस्यानीहैव शोभना ।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम् ॥ ४ ॥[u]

नमोऽर्थेभ्यो विवादं ये भ्रातृणामपि कुर्वते ।
आक्षीरधारैकभुजामागर्भैकनिवासिनाम् ॥ ५ ॥ [v]

कुसुमानीव फलानामर्थानां हेतवो गुणाः प्रायः ।
अत एव कृतार्था धनवत्सु गुणा न दृश्यन्ते ॥ ६ ॥[w]

## राष्ट्रप्रशंसापद्धतिः ॥ १०२ ॥

भूर्गुणैर्वर्धते राष्ट्रं तद्वृद्धिर्नृपवृद्धये ।
तस्माद्गुणवतीं भूमिं भूत्यै भूपतिरावसेत् ॥ १ ॥

रम्या सकुञ्जरा वन्या वारिस्थलपथान्विता ।
अदेवमातृका चेति शस्यते भूर्विभूतये ॥ २ ॥

शूद्रकारुवणिक्प्रायो महारम्भः कृषीवलः ।
नानादेश्यसमाकीर्णो धार्मिकः पशुमान् धनी ॥
ईदृग्जनपदः शस्तोऽमूर्खव्यसनिनायकः ॥ ३ ॥[x]

जाङ्गलं यस्य सम्पन्नमार्यप्रायमनाविलम् ।
रम्यमानतसामन्तं स्वाजीवं देशमावसेत् ॥ ४ ॥[y]

सशर्करा सपाषाणा साटवी नित्यतस्करा ।
रूक्षा सकण्टकवना सव्याला चेति भूरभूः ॥ ५ ॥

u. Mahābhārata. v. Klavāilāsa. w. Kāmandaka.
y. Manu, VII 69.



शरीरकर्शनात्प्राणाः क्षीयन्ते प्राणिनां यथा ।
तथा राज्ञामपि प्राणाः क्षीयन्ते राष्ट्रकर्शनात् ॥ ६ ॥[z]

भूमौ तु जायते सर्वं भूमौ सर्वं विनश्यति ।
भूमिः प्रतिष्ठा भूतानां भूमिरेव परायणम् ॥ ७ ॥[a]

## ॥ दुर्गपद्धतिः ॥ १०३ ॥

पृथुसीममहाखातमुच्चप्राकारगोपुरम् ।
समावसेत् पुरं शैलसरिन्मरुवनाश्रयम् ॥ १ ॥

धन्[1]यदुर्गं महद्दुर्गमदुर्गं तार्क्ष्यमेव च ।
नृदुर्गं गिरिदुर्गं च समाश्रित्य वसेन्नृपः ॥ २ ॥

सापसाराणि दुर्गाणि भुवः सानूपजाङ्गलाः ।
निवासाय प्रशस्यन्ते भूभृतां भूतिमिच्छताम् ॥ ३ ॥[b]

इष्टाः पशुमृगा व्याला मत्स्याश्चाभयचारिणः ।
अन्यत्र गुप्तिस्थानेभ्यो वधबन्धमवाप्नुयुः ॥ ४ ॥[c]

दुर्गाणि दुर्ग्रहाण्यासन् तस्य योद्धुरपि द्विषाम् ।
न हि सिंहो गजास्कन्दी भयाद् गिरिगुहाश्रयः ॥ ५ ॥[d]

दुर्गेषु वै महाराज षट्सु शास्त्रविनिश्चितम् ।
सर्वदुर्गेषु मन्यन्ते नरदुर्गं सुदुर्गमम् ॥ ६ ॥

यत् पुरं दुर्गसम्पन्नं धान्यायुधसमन्वितम् ।
वश्यामात्यबलो राजा तत् पुरं स्वयमावसेत् ॥ ७ ॥[e]

दुर्गेण रक्ष्यते राजा तस्मात्को[2]शस्ततो बलम् ।
तस्माद्दुर्गप्रधाना हि जयलक्ष्मीर्महीभृताम् ॥ ८ ॥

जलवद्धान्यधनवद्दुर्गं कालसहं महत् ।
दुर्गहीनो नरपतिर्वाताभ्रावयवैः समः ॥ ९ ॥[f]

z. Manu. a. Mahābhārata.
b. Manu c. Kauṭilya. d. Kālidāsa.
e. Mahābhārata. f. Kāmandaka.

१ धान्य–M धन्व–$S_2$. २. त्को–$S_2$.

॥ सेनापतिपद्धतिः ॥ १०४ ॥

हन्तारं परसैन्यानां दुःसाध्यहितनिश्चयम् ।
इत्यादिलक्षणोपेतं कुर्वीत ध्वजिनीपतिम् ॥ १ ॥

सर्वशास्त्रार्थतत्त्वज्ञं सहिष्णुं देशजं तथा ।
अलुब्धं लब्धसन्तुष्टं स्वामिमित्रं बुभूषकम् ॥ २ ॥

सेनापतिं यः कुरुते न चैनमवमन्यते ।
तस्य विस्तीर्यते राज्यं ज्योत्स्ना ग्रहपतेरिव ॥ ३ ॥[g]

ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
शीर्यते युद्धमासाद्य पिपीलिकपुटं यथा ॥ ४ ॥

यथाप्यकर्णधारा नौः रथश्चासारथिर्यथा ।
द्रवेद्यथेष्टं तद्वत्स्यादृते सेनापतेर्बलम् ॥ ५ ॥

नद्यद्रिवनदुर्गेषु यत्र यत्र भयं भवेत् ।
सेनापतिस्तत्र तत्र गच्छेत् व्यूहीकृतैर्बलैः ॥ ६ ॥

दाता प्रियंवदो दान्तो मतिमान्दृढनिश्चयः ।
राज्ञः[1] सेनापतिः कार्यः शूरो युद्धविशेषवित् ॥ ७ ॥

अभिप्रायं यो विदित्वा तु भर्तुः
सर्वाणि कार्याणि करोत्यवक्रः ।
वक्ता हितानामनुरक्त आर्यः
शक्तिज्ञ आत्मैव हि सोऽनुकम्प्यः ॥ ८ ॥

॥ दुष्टसेनापतिपद्धतिः ॥ १०५ ॥

क्रूरं व्यसनिनं स्तब्धमप्रगल्भमनायकम् ।
मूर्खमन्यायकर्तारं नाधिपत्ये नियोजयेत् ॥ १ ॥

g. Mahābhārata.

१ राज्ञा–S₁.



॥ रथपद्धतिः ॥ १०६ ॥

समेति समराङ्गणं नरपतेः क्वणत्किङ्किणी–
झणत्कृतिपरम्परामुखरिताखिलाशामुखः ।
जयध्वजचलत्पटीनियमितातपाडम्बरो
निराकृतनिशाचराधिपमनोरथोऽयं रथः ॥ १ ॥

॥ सारथिपद्धतिः ॥ १०७ ॥

चिकित्सां वेत्ति वाहानां निमित्तशकुनादिवित् ।
कृतविद्यश्च शूरश्च सारथिः पार्थिवोचितः ॥ १ ॥

॥ गजपद्धतिः ॥ १०८ ॥

वारणा यत्र तत्राहं यत्राहं तत्र वारणाः ।
न ते यत्र न तत्राहं नाहं यत्र न तत्र ते ॥ १ ॥

ततः पार्ष्ण्यङ्कुशाङ्गुष्ठैः कृतिना चोदितो द्विपः ।
प्रसारितकरः प्रायः स्तब्धकर्णेक्षणो द्रुतम् ॥ २ ॥[h]

सुगन्धिदानस्रुतिशीकरेषु दन्ताभिघातस्फुटितोपलेषु ।
गजेषु नीलाभ्रसमेषु राज्यं नित्यं निबद्धं पृथिवीपतीनाम् ॥ ३ ॥[i]

जले स्थले च द्रुमसंकटे च
चलेऽचले साधु समेऽसमे च ।
प्राकारहर्म्याट्टविदारणे च
जयो ध्रुवं नागवतां बलानाम् ॥ ४ ॥

सुकल्पितः संयति दृष्टमार्गः
सोऽधिष्ठितो वीरतरेण पुंसा ।
तुरङ्गमाणामपि कल्पितानां–
मेको गजः षष्टिशतानि हन्ति ॥ ५ ॥

भयेषु दुर्गाणि नदीषु सेतवो गृहाणि मार्गेषु रणेषु राक्षसाः ।
मनःप्रसादेषु विनोदहेतवो गजाद्वान्यत्किमिवास्ति साधनम् ॥ ६ ॥[j]

h. Mahābhārata. i. Kāmandaka. j. Bhoja.

एकोऽपि वारणपतिर्द्विषतामनीकं
व्यक्तं निहन्ति मदसत्त्वगुणोपपन्नः ।
नागेषु हि क्षितिभृतां विजयो निबद्ध-
स्तस्माद्गजाधिकबलो नृपतिः सदा स्यात् ॥ ७ ॥[k]

## ॥ अश्वपद्धतिः ॥ १०९ ॥

यस्याश्वा विजयस्तस्य यस्याश्वास्तस्य मेदिनी ।
यस्याश्वाः सम्पदस्तस्य यस्याश्वास्तस्य कीर्तयः ॥ १ ॥[l]

निवसत्यश्वसङ्घातैः सङ्कीर्णा यस्य वाहिनी ।
तस्य सागरपर्यन्ता हस्ते तिष्ठति मेदिनी ॥ २ ॥

त्यागभोगविलासेषु राज्ञां मित्रपरम्परा ।
असिसङ्घट्टसम्बाधे मित्रमेकं तुरङ्गमः ॥ ३ ॥[m]

श्रान्तं युद्धेषु निर्भिन्नं शस्त्रैः संज्ञाविपर्यये ।
अतिवाहयते भूपमेक एव तुरङ्गमः ॥ ४ ॥[n]

राजारूढे हयो भाति हयस्थः शोभते नृपः ।
उभयोरविशेषत्वाद्राज्ञामात्मसमा हयाः ॥ ५ ॥[o]

गन्धं च माल्यं च विलेपनं च
स्वादु हितं खादनभोजनं च ।
आहारकालादरणं च सर्वं
सङ्ग्रामकाले तुरगाः स्मरन्ति ॥ ६ ॥[o]

बलाभिपूर्णाः स्थिरसत्त्वबन्धाः
रंहस्विनो लक्षणयोगहृद्याः ।
तुरङ्गमा यत्र वसन्ति देशे
तत्र स्थिरासङ्गमुपैति लक्ष्मीः ॥ ७ ॥

k. Kāmandaka. l. Śālihotra. m. Aśvahṛdaya.
n. Aśvaśāstra o. Aśvaśāstra.



किं स्यन्दनैः केतनदीर्णमेघैः
किं वा गजैर्गण्डविदीर्णदानैः ।
किं पत्तिभिर्वा तुरगो यदि स्यात्
स एव संख्येषु जयं प्रसूते ॥ ८ ॥

कुच्छ्रेषु सन्मित्रमुदूढभारं
भूषा च विद्या विहृतिष्वमेया ।
रणाम्बुराशिष्वपि यानपात्रं
तत् किं न यः स्यान्नृपतेस्तुरङ्गः ॥ ९ ॥[p]

रात्रिश्चन्द्रविवर्जितेव नलिनीवोत्सन्नपङ्केरुहा
योषित्प्रोषितभर्तृकेव जलदच्छन्ना दिनश्रीरिव ।
लीलोद्यानमहीरुहां ततिरिवानुत्पन्नचूतद्रुमा
गच्छत्कुञ्जरवीरवत्यपि चमूर्न भ्राजतेऽश्वैर्विना ॥ १० ॥[q]

अपि दिङ्नागभोगीन्द्रमौलिसुस्थिरशालिनी ।
अहो महीं विना नाश्वैस्तिष्ठत्युपरिवर्तिभिः ॥ ११ ॥

यावन्नभो न यात्यर्कस्तावद्देवेन्दुतारकाः ।
यावद्वाहा न युज्यन्ते तावन्नागाः पदातयः ॥ १२ ॥

## ॥ पदातिपद्धतिः ॥ ११० ॥

पितृपैतामहो वश्यः संहतो दत्तवेतनः ।
विख्यातपौरुषो जन्यः कुशलः कुशलैर्वृतः ॥ १ ॥

प्रवासायासदुःखेषु युद्धेषु च कृतश्रमः ।
अद्वयः क्षत्रियप्रायो दण्ड्यो दण्डभृतां मतः ॥ २ ॥

योधाः समरशौण्डीराः कृतज्ञाः शास्त्रकोविदाः ।
इष्वस्त्रकुशला यस्य तस्येयं नृपतेर्मही ॥ ३ ॥[r]

पित्रा संवर्धितो नित्यं कृतास्त्रः साम्परायिकः ।
तस्य दण्डवतो दण्डं स्वदेहान्न विशिष्यते ॥ ४ ॥[s]

p. Rājaputrīya. q. Bhoja.
r. Mahābhārata. s. Kāmandaka.

## ॥ वीरपद्धतिः ॥ १११ ॥

असमर्थं परित्यज्य समर्थं पर्युपासते ।
नृपाणामस्ति दायाद्यं वीरभोज्या वसुन्धरा ॥ १ ॥[t]

योषिन्मध्ये सभामध्ये सुलभाः खड्गधारिणः ।
असिसङ्घातसङ्घट्टविस्फुलिङ्गेषु दुर्लभाः ॥ २ ॥[u]

जयेन लभ्यते लक्ष्मीर्मृतेनापि सुराङ्गनाः ।
क्षणविध्वंसिभिः कायैः का चिन्ता मरणे रणे ॥ ३ ॥[v]

सादयत्येव तेजांसि दूरस्थोऽप्युन्नतो रिपुः ।
सायुधोऽपि निकृष्टात्मा किमासन्नः करिष्यति ॥ ४ ॥

नात्युच्चशिखरो मेरुर्नातिनीचं धरातलम् ।
व्यवसायद्वितीयानां न ह्यपारो महोदधिः ॥ ५ ॥[w]

बहवः पङ्गवो लोके नराः शास्त्राण्यधीयते ।
वीराः केचन खड्गाग्रधारापातसहिष्णवः ॥ ६ ॥

सर्वैर्गुणैर्विहीनोऽपि वीर्यवान् हि तरेद्रिपून् ।
सर्वैरपि गुणैर्युक्तो निर्वीर्यः किं करिष्यति ॥ ७ ॥[x]

स्वर्गे हतः[१] पूज्यते वै हन्ता त्वत्रैव पूज्यते ।
द्वावेव सुखमेधेते हन्ता यश्चैव हन्यते ॥ ८ ॥

साधयत्यसहायोऽपि कार्यमुद्यतपौरुषः ।
सिंहः पातयते मत्तानेक एव मतङ्गजान् ॥ ९ ॥

यथा चराणामचरा ह्यदंष्ट्रा दंष्ट्रिणामपि ।
अपाणयः पाणिमतामन्नं वीरस्य कातराः ॥ १० ॥[y]

क्षमया हि समायुक्तं मामयं मकरालयः ।
असमर्थं विजानाति धिक् क्षमामीदृशे जने ॥ ११ ॥[z]

---

t. Mahābhārata. u. Vallabhadeva. v. Pañcatantra.
w. Vallabhadeva. x. Vallabhadeva.
y. Mahābhārata. z. Rāmāyaṇa, vi. 21.
१. जि–$S_1$.



विक्लवो वीर्यहीनो यः स दैवमनुवर्तते ।
वीराः सम्भावितात्मानो न दैवं पर्युपासते ॥ १२ ॥[a]

उदायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत् केन सेत्स्यति ॥ १३ ॥[b]

अजन्मा पुरुषस्तावद् गतासुस्तृणमेव वा ।
यावन्नेषुभिरादत्ते विलुप्तमरिभिर्यशः ॥ १४ ॥

ग्रसमानमिवौजांसि सदसो गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान् ॥ १५ ॥[c]

अकृत्वा हेलया पापमुच्चैर्मूर्धसु विद्विषाम् ।
कथंकारमनालम्बा कीर्तिर्द्यामधिरोहति ॥ १६ ॥[d]

गाण्डीवेनाभिधास्यामि क्लीबो हि वचनोत्तरः ।
वक्तव्यमेव सर्वेण चरमं पूर्वमेव वा ॥ १७ ॥[e]

तावद्गर्जति मातङ्गो वने मदकलारवः ।
शिरोवगललाङ्गूलो यावन्नायाति केसरी ॥ १८ ॥[f]

नाभिषेको न संस्कारः सिंहस्य क्रियते वने ।
विक्रमार्जितसत्त्वस्य स्वयमेव मृगेन्द्रता ॥ १९ ॥[g]

पृथुरयमहं कृशीयान् गम्यो नास्याहमित्यनास्थैषा ।
किमचलशिरोऽतिमहदिति वज्रमणीयो न दारयति ॥ २० ॥[h]

अङ्गणवेदिर्वसुधा कुल्या जलधिः स्थली च पातालम् ।
वल्मीकश्च सुमेरुः कृतप्रतिज्ञस्य शूरस्य ॥ २१ ॥[i]

यदि खाण्डवमेष्यति प्रमादात्
सगणो वा परिरक्षितुं महेन्द्रः ।
शरताडितखण्डकुण्डलानां
कदनं द्रक्ष्यति देववाहिनीनाम् ॥ २२ ॥[j]

---

a. Rāmāyaṇa, II. 23.17. b. Bhaṭṭanārāyaṇa.
c. Bhāravi. d. Māgha.
e. Mahābhārata. f. Vallabhadeva. g. Pañcatantra.
h. Ravigupta. i. Bāṇa. j. Mahābhārata.

को वीरस्य मनस्विनः स्वविषयः को वा विदेशः स्मृतो
यं देशं श्रयते तमेव कुरुते बाहुप्रतापार्जितम् ।
यद् दंष्ट्रानखराङ्कुलिप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः ॥ २३ ॥[k]

एकः स एव तेजस्वी सैंहिकेयः सुरद्विषाम् ।
शिरोमात्रविशेषेण जीयन्ते येन शत्रवः ॥ २४ ॥

स्पृहयति भुजयोरन्तरमायतकरवालकररुहविदीर्णम् ।
विजयश्रीर्वीराणां व्युत्पन्नप्रौढवनितेव ॥ २५ ॥[l]

पुरुषस्य कृतं भुजद्वयं
प्रविधातुं द्वयमेव वेधसा ।
सुहृदामुदयं च विद्विषा-
मवलेपप्रतिकारमेव च ॥ २६ ॥

सामोपायनयप्रपञ्चपटवः प्रायेण ये भीरवः
शूराणां व्यवसाय एव हि परं संसिद्धये कारणम् ।
विस्फूर्जद्विकटाटवीगजघटापीठैकसञ्चूर्णन-
व्यापारैकरसस्य सन्ति विजये सिंहस्य के मन्त्रिणः ॥ २७ ॥[m]

आर्द्रैः स्वैरपि संयताग्रचरणो मूर्च्छाविरामः क्षणे
स्वाधीनप्रणताङ्गशस्त्रसचिवो रोमोद्गमं वर्म यत् ।
भग्नानुज्ज्वलयन् निजान् प्रतिभटानाधर्षयन् निष्ठुरं
धन्यो धाम जयश्रियः पृथुरणस्तम्भे पताकायते ॥ २८ ॥

## ॥ वीरवादपद्धतिः ॥ ११२ ॥

क्षुद्राः सन्त्रासमेनं विजहत हरयो भिन्नशक्रेभकुम्भा
युष्मद्देहेषु लज्जां दधति परममी सायका निष्पतन्तः ।
सौमित्रे तिष्ठ पात्रं त्वमसि नहि रुषां नन्वहं मेघनादः
किञ्चिद्भ्रूभङ्गलीलानियमितजलधिं राममन्वेषयामि ॥ १ ॥[n]

k. Pañcatantra. (Hitopadeśa). l. SBhg.
m. SBhg. n. Hanumānnāṭaka.



शस्त्राशस्त्रिकथैव काननमगाद्गीर्वाणपाणिंधमाः
पन्थानो दिवि सङ्कुचन्ति वसुधा वन्ध्या न सूते भटान् ।
लक्ष्मीरप्यरविन्दसौधवलभीनिर्व्यूहपर्यङ्किका-
विश्रान्तैरलिभिर्न कुञ्जरघटागण्डोत्करैर्मोदते ॥ २ ॥[o]

अत्यग्निर्जमदग्निराश्रमपरैर्यैः श्रोत्रियैः श्रूयते
यैः श्रूयेऽहमहंयुभिर्नृपतिभिस्ते चोभये साक्षिणः ।
इक्ष्वाकोरथवा भृगोर्भगवतो भावी स्वधाविप्लवः
स्वाध्यायेन शपे शपे परशुना पत्या पशूनां शपे ॥ ३ ॥

कृष्टा¹ येन शिरोरुहेषु पशुना पाञ्चालराजात्मजा
येनास्याः² परिधानमप्यपहृतं राज्ञां कुरूणां पुरः ।
यस्योरस्स्थलशोणितासवमहं पातुं प्रतिज्ञातवान्
सोऽयं मद्भुजपञ्जरे निपतितः संरक्ष्यतां कौरवाः ॥ ४ ॥[p]

युष्मच्छासनलङ्घनांभसि मया मग्नेन नाम स्थितं
प्राप्ता नाम विगर्हणा स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि व गुरुर्नाहं विधेयस्तव ॥ ५ ॥[p]

## ॥ युद्धपद्धतिः ॥ ११३ ॥

धनुषा द्वे शते गत्वा तत्र स्थित्वा नृपोत्तम ।
मेलयित्वा बलं सर्वमेवमाघोषयेत्³ततः ॥ १ ॥

तस्मै दास्यामि नियुतं राजानं हन्ति यो रणे ।
तत्कुमारानिहन्तॄणां दास्यामि नियुतार्धकम् ॥ २ ॥

सामान्तमण्डलाधीशहन्तॄणां तु तदर्धकम् ।
सचिवामात्यहन्तॄणां तथा स्यात् पारितोषिकम् ॥ ३ ॥

प्रधानयोधहन्तॄणां दास्ये पञ्चसहस्रकम् ।
द्विसहस्रं प्रदास्यामि रणेऽस्मिन् गजपातिनाम् ॥ ४ ॥

o. SBhg. p. Bhatta Nārāyaṇa.
१ कृष्टो–$S_1$. २ येनो°–$S_1$. ३ °दिति–M.

सहस्रं प्रतिदास्यामि स्यन्दनस्य निघातिनाम् ।
अश्वसादिनिहन्तॄणां प्रदास्ये पञ्चकं शतम् ॥ ५ ॥

शतमस्मै प्रदास्यामि समानयति यः शिरः ।
एवं विलोभ्य तान् सर्वान् प्रयायाद्युद्धसंमुखः ॥ ६ ॥

द्विशतं वा तदर्धं वा तदर्धं हयसादिनः ।
परः प्रस्थापयेद्राजा युद्धभूमिपरीक्षणे ॥ ७ ॥

शूरं महाबलं दान्तं धीरं सूचनवेदिनम् ।
ईदृग्गुणयुतं नागमारोहेद् विजयोद्यतः ॥ ८ ॥

चलं फल्गु यतो भिन्नं यतो भिन्नैरधिष्ठितम्।
तद्बलं प्रथमं हन्यादात्मानं चोपबृंहयेत् ॥ ९ ॥

संहतं तु गजानीकैः प्रचण्डैरवदारयेत् ।
प्रचण्डैर्वीरमुख्यैश्च फल्गु सैन्यं विदारयेत् ॥ १० ॥

अश्वव्यूहैर्भटानीकं वाजिव्यूहं तु दन्तिभिः ।
विषतैलाचितैर्बाणैः विभिन्द्यात् गजयूथपान् ॥ ११ ॥

विमृश्य राजचिह्नानि निश्चित्य नृपतेः पदम् ।
सर्वसैन्येन संयुक्तं तत्र यायाज्जयोन्मुखः ॥ १२ ॥

एवं निहत्य समरे दुष्टं शत्रुं मदोद्धतम् ।
जयतूर्यनिनादेन हर्षयेत् सुभटान् स्वकान् ॥ १३ ॥[q]

पुत्रो भ्राता पिता चैव स्वस्त्रियो मातुलस्तथा ।
सम्बन्धिबान्धवाश्चैव योद्धव्याः क्षत्रजीविना ॥ १४ ॥[r]

नाच्छित्वा परमर्माणि कृत्वा कर्म सुदुष्करम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥ १५ ॥

इदं हि प्राणयशसां क्रयविक्रयपाटवम् ।
स्वामिसत्कारशल्यानामत्रैवोद्धरणक्रिया ॥ १६ ॥

आहवेषु यदन्योन्यं जिघांसन्तो महीभृतः ।
युध्यमानाः स्वयं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः ॥ १७ ॥[r]

q. Mānasollāsa. r. Mahābhārata.
१ °स्त°–$S_1$.



न च हन्यात्प्रधावन्तं न क्लीबं न कृताञ्जलिम् ।
न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ॥ १८ ॥

न सुप्तं न विसन्नाङ्गं न नग्नं न निरायुधम् ।
नायुध्यमानं पश्यन्तं न परेण समागतम् ॥ १९ ॥

नायुधव्यसनं प्राप्तं नार्तं नातिपरिक्षतम् ।
न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ॥ २० ॥[s]

आकर्णपलितः श्यामो वयसाशीतिकात्परः ।
रणेपर्यचरद्द्रोणो वृद्धः षोडशवर्षवत् ॥ २१ ॥

अधर्मः क्षत्रियस्यैतद्यद्व्याधिमरणं गृहे ।
युद्धे तु मरणं यत्स्यात्सोऽस्य धर्मः सनातनः ॥ २१ ॥

न ध्रुवं सुखमस्तीह कुतो राज्यं कुतो यशः ।
इह कीर्तिर्निधातव्या सा च युद्धेन नान्यथा ॥ २३ ॥

गजानां रथिनो मध्ये रथिनामपि सादिनः ।
सादिनामन्तरे स्थाप्य पादातमपि दंसितम् ॥ २४ ॥

अमित्रं नैव मुञ्चेत ब्रुवन्तं करुणान्यपि ।
दुःखं तत्र न कुर्वीत हन्यात् पूर्वापकारिणम् ॥ २५ ॥

एतद्धनञ्जयो वाच्यो नित्योद्युक्तो वृकोदरः ।
यदर्थं क्षत्रियासूतिस्तस्य कालोऽयमागतः ॥ २६ ॥

अर्थास्त्यजत पात्रेषु सुखमाप्नुत कामजम् ।
प्रियं प्रियेभ्यः कुरुत राजा हि त्वरते जये ॥ २७ ॥

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ २८ ॥[t]

राज्ञे तु दद्यादुद्धारमित्येषा वैदिकी श्रुतिः ।
राज्ञा तु सर्वयोद्धेभ्यो दातव्यमपृथग्जिते ॥ २९ ॥[u]

s. Manu.
t. Bhagavadgita. u. Kāmandaka.
१ सक्ताः–$S_1$.

## ॥ कूटयुद्धपद्धतिः ॥ ११४ ॥

शक्तित्रयविहीनेन नृपेण रिपुघातिना ।
प्रयोज्याः स्युस्त्रियो नित्यं विषघातविशारदाः ॥ १ ॥

शात्रवाणां विरक्ता ये विकृता अन्तरं गताः ।
तान् वितोद्य प्रमादेन रसं तैस्तु प्रयोजयेत् ॥ २ ॥

तटाककूपवापीषु तथा लघुसरःसु च ।
विषं विषे नियोक्तव्यं द्विषतां प्राणघातकम् ॥ ३ ॥

अन्ने पाने च ताम्बूले फले पुष्पे विभूषणे ।
वस्त्रे विलेपने धूपे शय्यायामासनेषु च ॥ ४ ॥

स्नानोदके तथा तैले पादाभ्यङ्गे सपादुके ।
क्रीडापुष्करिणीनद्योः प्रयुञ्जीत विषं द्विषाम् ॥ ५ ॥

कुमारसचिवामात्यमन्त्रिसेनाधिपेषु च ।
महावारणमुख्येषु तुरगेषूत्तमेषु च ॥ ६ ॥

एवं विषप्रयोगेण शत्रूणां क्षुद्रघातनम् ।
क्षीणे तत् क्रियते यस्तु विषदण्डः स उच्यते ॥ ७ ॥

शूरश्च दृढभक्तश्च त्यक्तप्राणभयश्च यः ।
धीरश्च समयज्ञश्च वधोपायविचक्षणः ॥ ८ ॥

वधूपुत्रविरक्तस्तु गृहीतबहुवेतनः ।
तेन सार्धं प्रयुञ्जीत प्रमत्तारिषु मायया ॥ ९ ॥

गीतवाद्यप्रसक्तेषु द्यूतक्रीडारसेऽपि च ।
मृगयासक्तचित्तेषु द्यूतयात्रापसक्तिषु ॥ १० ॥

अङ्कमल्लविनोदेषु तथान्येषूत्सवेषु च ।
अन्तःपुरप्रचारेषु देवपूजापरेषु च ॥ ११ ॥

वीरक्रीडानिषण्णेषु भोजनस्थानवर्तिषु ।
व्यग्रेष्वन्येषु कार्येषु कुर्याद्वैरिषु घातनम् ॥ १२ ॥

पूर्वोदितगुणैस्तीक्ष्णैः सुभटैर्यत्र घातनम् ।
मायया क्रियते गूढं घातदण्डः स कीर्तितः ॥ १३ ॥



अथर्वविधितत्त्वज्ञैर्ब्राह्मणैर्विजितेन्द्रियैः ।
मन्त्रयन्त्रविधानज्ञैर्दूराडुन्मूलयेद्रिपून् ॥ १४ ॥

आभिचारिकहोमैस्तु मन्त्रैः षट्कर्मसाधनैः ।
संहरेज्जीवितं यस्तु स्यात् स दण्डोऽभिचारकः ॥ १५ ॥[v]

## ॥ धीरपद्धतिः ॥ ११५ ॥

न सन्त्याज्यं च ते धैर्यं कदाचिदपि पाण्डव ।
धीरस्य स्पष्टदण्डस्य नैवाज्ञा प्रतिहन्यते ॥ १ ॥

धैर्येण युक्तस्य सतः शरीरं न तु शीर्यते ।
आरोग्यात्तु शरीरस्य स पुनर्विन्दते श्रियम् ॥ २ ॥

अथ राज्ञा दरः कार्यो न तु कस्यांचिदापदि ।
अपि चेतसि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ ३ ॥[w]

भीतवत्संविधातव्यं यावद्भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥ ४ ॥

पुत्रैर्दारैः सुखैश्चैव वियुक्तस्य धनेन च ।
मग्नस्य व्यसने घोरे पुंसः श्रेयस्करी धृतिः ॥ ५ ॥

कदर्थितस्यापि हि धैर्यवृत्तेः न शक्यते धैर्यगुणः प्रमार्ष्टुम् ।
अधोमुखस्यापि कृतस्य वह्नेः नाधः शिखा यान्ति कदाचिदेव ॥ ६ ॥[x]

## ॥ भीरुपद्धतिः ॥ ११६ ॥

असन्तो ये निवर्तन्ते वेदेभ्य इव नास्तिकाः ।
नरकं भजमानास्ते प्रतिपद्यन्ति किल्बिषम् ॥ १ ॥

फलायन्ते येत्वहतास्तांश्च वैवस्वतो यमः ।
दण्डयन् भर्त्सयन् नित्यं निरयेभ्यो न मुञ्चति ॥ २ ॥

मनुष्यापसदा ह्येते ये भवन्ति पराङ्मुखाः ।
राशिवर्धनमात्रास्ते नैव ते प्रेत्य नो इह ॥ ३ ॥

---

v. Mānasollāsa. w. Mahābhārata. x. Pañcatantra.

शत्रुभिश्चापि हसितो मानी पौरुषवर्जितः ।
चेतयानोऽपि को जीवेत् कृच्छ्राच्छत्रुभिरुज्झितः ॥ ४ ॥

नैष पूर्वैः कृतो धर्मः क्षत्रियस्य पलायनम् ।
श्रेयो हि मरणं युद्धे क्षत्रियस्य पलायनात् ॥ ५ ॥

यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् ।
क्षत्रियो विजयाकाङ्क्षी स्तेन इत्येव तं विदुः ॥ ६ ॥

यच्चास्य सुकृतं किंचिदमृतार्थमुपार्जितम् ।
भर्ता तत्सर्वमादत्ते परावृत्तभटस्य तु ॥ ७ ॥

त्यागेन यः स्वनाथानां स्वान् प्राणांस्त्रातुमिच्छति ।
तं हन्युः काष्ठलोष्टेन दग्धव्यश्च घटाग्निना ॥ ८ ॥

यस्तु योधः परावृत्तः संत्रस्तो हन्यते परैः ।
अप्रतिष्ठः स नरकं याति नास्त्यत्र संशयः ॥ ९ ॥

निरामर्षं निरुत्साहं निर्वीर्यमरिनन्दनम् ।
मा स्म सीमन्तिनी काचिज्जनयेत् पुत्रमीदृशम् ॥ १० ॥[y]

## ॥ मानिपद्धतिः ॥११७॥

न कदापि बहिर्यान्ति मानिनां प्रार्थनागिरः ।
यदि निर्यातुमिच्छन्ति तदा प्राणपुरःसराः ॥ १ ॥[z]

कुसुमस्तबकस्येव द्वे गती तु मनस्विनः ।
मूर्ध्नि वा सर्वलोकस्य शीर्यते वन एव वा ॥ २ ॥

म्रियते मानमापन्नो न च याति पराभवम् ।
शिलास्तम्भोऽतिभारेण भिद्यते नैव नम्यते ॥ ३ ॥

यस्मिन् जीवति जीवन्ति बहवः स तु जीवति ।
बकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम् ॥ ४ ॥

एक एव खगो मानी चिरं जीवतु चातकः ।
पिपासितो वा म्रियते याचते वा पुरन्दरम् ॥ ५ ॥[a]

y. Mahābhārata. z. Bhartṛhari. a. Pañcatantra.



तुङ्गत्वमितरा नाद्रौ नेदं सिन्धावगाधता ।
अलङ्घनीयताहेतुः उभयं तन्मनस्विनि ॥ ६ ॥

नीतिरापदि यद्गम्यः परस्तन्मानिनो ह्रिये ।
विधुर्विधुन्तुदस्येव पूर्णस्तस्योत्सवाय सः ॥ ७ ॥[b]

तावदाश्रियते लक्ष्म्या तावदस्य स्थिरं यशः ।
पुरुषस्तावदेवासौ यावन्मानान्न हीयते ॥ ८ ॥

दुरासदवनज्यायान् गम्यस्तुङ्गोऽपि भूधरः ।
न जहाति महौजस्कं मानप्रांशुमलङ्घ्यता ॥ ९ ॥[c]

वरमश्रीकता लोके नासमानसमानता ।
इतीव कुसुमोद्भेदात्कमलं कुमुदायते ॥१०॥

वरमुन्नतलाङ्गूलात्सटाधूननधूसरात् ।
सिंहात्पदप्रहारोऽपि न सृगालाधिरोहणम् ॥ ११ ॥

दातुः शत्रोश्च गृह्णन्ते लुठन्तोऽपि मुमूर्षया ।
उत्तानप्रसृतं हास्यमपराधं च मानिनः ॥ १२ ॥

अभिमानधनस्य गत्वरैरसुभिः स्थास्नु यशश्चिचीषतः ।
अचिरांशुविलासचञ्चला ननु लक्ष्मीः फलमानुषङ्गिकम् ॥ १३ ॥[c]

ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः ।
अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः ॥ १४ ॥[c]

अभिमानवतो मनस्विनः प्रियमुच्चैः पदमारुरुक्षतः ।
विनिपातनिवर्तनक्षमं मतमालम्बनमात्मपौरुषम् ॥ १५ ॥[c]

असमापितकृत्यसम्पदां हतवेगं विनयेन तावता ।
प्रभवन्त्यभिमानशालिनां मदमुत्तम्भयितुं विभूतयः ॥ १६ ॥[c]

अत्युन्नतिव्यसनिनः शिरसोऽधुनैव
स्वस्यैव चातकशिशुः प्रणयं विधत्ताम् ।
अस्यैतदिच्छति यदि प्रततासु दिक्षु
ताः स्वच्छशीतमधुराः क्व नु नाम नापः ॥ १७ ॥[d]

b. Māgha. c. Bhāravi. d. Bhallaṭa.
१ °होर°–M.

स्वल्पेऽप्यामिषवस्तुनि प्रपतितो नीचः करोत्यञ्जलिं
नाकारैरपि चार्थितां कथयति प्राज्ञः स्वभावोन्नतः ।
श्वा तु प्रोषितपिण्डमप्यभिलषन् लाङ्गूलमुल्लासय-
त्यालानार्पितकन्धरोऽपि च करी यत्नेन सम्भोज्यते ॥ २८ ॥

पुण्ये ग्रामे वने वा महति सितपटच्छन्नपालीं कपाली-
मादायाम्नायगर्भं द्विजहुतहुतभुग्धूमधूम्रोपकण्ठम् ।
द्वारं द्वारं प्रवृत्तो वरमुदरदरीपूरणाय क्षुधार्तो
मानी प्राणी सनाथो न पुनरनुदिनं तुल्यकुल्येषु दीनः ॥ २९ ॥[e]

## ॥ मानहीनपद्धतिः ॥११८॥

जीव्यते धनहीनेन विकलाङ्गेन जीव्यते ।
जीवितप्रियतां पश्य परिभूतोऽपि जीवति ॥ १ ॥[f]

शक्तिवैकल्यनम्रस्य निःसारत्वाद् बलीयसः ।
जन्मिनो मानहीनस्य तृणस्य च समा गतिः ॥ २ ॥

मुनिरस्मि निरागसः कुतो मे
भयमित्येष न भूतयेऽभिमानः ।
परवृद्धिषु बद्धमत्सराणां
किमिव ह्यस्ति दुरात्मनामलङ्घ्यम् ॥ ३ ॥[g]

## ॥ वीरपत्नीप्रलापपद्धतिः ॥११९॥

अतीव खलु ते कान्ता वसुधा वसुधाधिप ।
गतासुरपि यां गात्रैर्मां विहाय निषेवसे ॥ १ ॥

महास्वप्नः स्वमेवेदं त्वं रामेण कथं हतः ।
त्वं मृत्योरपि मृत्युः स्याः कथं मृत्युवशं गतः ॥ २ ॥

शयनेषु महार्हेषु शयित्वा राक्षसेश्वरः ।
इह कस्मात्सुतप्तस्त्वं धरणीधूलिधूसरः ॥ ३ ॥

इन्द्रियाणि पुरा जित्वा त्रैलोक्यं विजितं त्वया ।
स्मरद्भिरेव तद्वैरमिन्द्रियैरिव निर्जितः ॥ ४ ॥

e. Bhartṛhari. f. Bhoja. g. Bhāravi.



शूराय न प्रदातव्या कन्या खलु विपश्चिता ।
शूरभार्यां हतां पश्य सद्यो मां विधवां कृताम् ॥ ५ ॥

उत्तिष्ठोत्तिष्ठ किं शेषे प्राप्ते परिभवे नवे ।
अद्य वै निर्भया लङ्कां प्रविष्टाः सूर्यरश्मयः ॥ ६ ॥

क्षुद्रा सङ्ग्रामयज्ञेन नानाप्रहरणाम्भसा ।
अस्मिन्नवभृथे स्नातः कथं पत्न्या मया विना ॥ ७ ॥[h]

अयं स रशनोत्कर्षी पीनस्तनविमर्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥ ८ ॥

येनैव बाणेन हतः प्रियो मे
तेनैव मां त्वं जहि सायकेन ।
हता गमिष्यामि समीपमस्य
न मामृते राम रमेत वाली ॥ ९ ॥[1]

हृदये वसतीति मत्प्रियं यदवोचस्तदवैमि कैतवम् ।
उपचारपदं न चेदिदं त्वमनङ्गः कथमक्षता रतिः ॥ १० ॥[i]

प्रेमापराधप्रणिपातकाले मत्पादभूषामणिकोटिलग्नाः ।
केशास्तव श्येननखैरिदानीं क्लिश्यन्त एते क्षितिरेणुरूक्षाः ॥ ११ ॥

वीर त्वया कौङ्कुममङ्गरागं स्नेहादनादृत्य विनिर्गतेन ।
आलिप्यते गात्रमिदं सरागैरमीभिरायोधनभूपरागैः ॥ १२ ॥

भूयिष्ठानि मुखानि चुम्बति भुजैर्भूयोऽपि चालिङ्गते
चारित्रव्रतदेवता भगवता कान्तेन मन्दोदरी ।
हा लम्बोदरकुम्भमौक्तिकमणिस्तोमैर्ममैकान्तया
......वा कथमन्तकस्य लभतो लङ्केन्द्र निद्रारसः ॥ १३ ॥

## ॥ अभयदानपद्धतिः ॥१२०॥

एकतः क्रतवः सर्वे समग्रवरदक्षिणाः ।
एकतो भयभीतस्य प्राणिनः प्राणरक्षणम् ॥ १ ॥[j]

बद्धाञ्जलिपुटं दीनं याचन्तं शरणागतम् ।
न हन्यादानृशंस्यार्थमपि शत्रुं परन्तप ॥ २ ॥

h. Rāmāyaṇa. i. Kālidāsa. j. Itihāsa samuccaya.

आर्तो वा यदि वा त्रस्तः परेषां शरणागतः ।
अरिः प्राणान्परित्यज्य रक्षितव्यः कृतात्मना ॥ ३ ॥

विनष्टः पश्यतस्तस्य रक्षणे शरणागतः ।
आदाय सुकृतं तस्य सर्वं गच्छेदरक्षितः ॥ ४ ॥[k]

विभीषणो वा सुग्रीवो यदि वा रावणः स्वयम् ।
[1]आनयैनं नरश्रेष्ठ दत्तमस्याभयं मया ॥ ५ ॥

अमित्रमपि चेच्चैनं शरणैषिणमागतम् ।
व्यसने योऽनुगृह्णाति स वै पुरुष उच्यते ॥ ६ ॥

श्रूयते च कपोतेन शत्रुः शरणमागतः ।
अर्चितश्च यथान्यायं स्वैश्च मांसैरभोज्यत ॥ ७ ॥

सकृदेव प्रपन्नाय तवास्मीति च याचते ।
अभयं सर्वभूतेभ्यो ददाम्येतद् व्रतं मम ॥ ८ ॥[l]

नृगप्रभृतयो राजन् राजानः शरणागताः ।
परिवार्य महात्मानः संसिद्धिं परमां गताः ॥९॥

सर्वेषामेव यज्ञानां क्षीयते कालतः फलम् ।
भीताभयप्रदानस्य क्षय एव न विद्यते ।।१०।।

दत्तमिष्टं तपः सत्यं तीर्थसेवा श्रुतं तथा ।
सर्वाण्यभयदानस्य कलां नार्हन्ति षोडशीम् ॥११॥

चतुःसागरपर्यन्तां यो दद्यात्पृथिवीमिमाम् ।
अभयं यस्तु भूतेभ्यस्तयोरभयदोऽधिकः ॥१२॥

## ॥ महत्पद्धतिः ॥ १२१ ॥

स पुमानर्थवज्जन्मा यस्य नाम्नि पुरस्कृते ।
नान्यामङ्गुलिमभ्येति संख्यायामुद्यताङ्गुलिः ॥ १ ॥[m]

k. Mahābhārata.
l. Vālmīki-Rāmāyaṇa, Yuddhakāṇḍa, 18.33.
m. Bhāravi.
१. मा°– $S_1$.



महद्भिर्बद्धवैरस्य विपत्तिरपि शोभते ।
दन्तभङ्गोऽपि नागानां श्लाघ्यो गिरिविदारणे ॥ २ ॥

अधमा धनमिच्छन्ति धनमानौ हि मध्यमाः ।
उत्तमा मानमिच्छन्ति मानं हि महतां धनम् ॥ ३ ॥[n]

स्थित्यतिक्रान्तिभीरूणि स्वच्छान्याकुलितान्यपि ।
तोयानि तोयराशीनां मनांसि च मनस्विनाम् ॥ ४ ॥[o]

छायावन्तो गतव्यालाः स्वारोहाः फलदायिनः ।
मार्गद्रुमा महान्तश्च परेषामेव भूतये ॥ ५ ॥[p]

पयोमुचः परीतापं हरन्त्येते शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ ६ ॥

वज्रादपि कठोराणि मृदूनि कुसुमादपि ।
लोकोत्तराणां चेतांसि को हि विज्ञातुमर्हति ॥ ७ ॥[q]

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति वंशः समुन्नतिम् ॥ ८ ॥

ब्राह्मणार्थे धनं दत्तं स्वदारे यौवनं गतम् ।
स्वामिकार्ये गताः प्राणाः अन्ते दृष्टोऽसि माधव ॥ ९ ॥

रवेरेवोदयः श्लाघ्यो नान्येषामुदयग्रहः ।
न तमांसि न तेजांसि यस्मिन्नभ्युदिते सति ॥ १० ॥[r]

यो न कामान्न च क्रोधान्न द्रोहादभिवर्तते ।
अमित्रं वा सुमित्रं वा स एवोत्तमपूरुषः ॥ ११ ॥

सर्वावस्थास्वकार्पण्यमदर्पः सति कारणे ।
उपकारः सपत्नेऽपि महापुरुषलक्षणम् ॥ १२ ॥[s]

यदि सन्ति गुणाः पुंसां विकसन्त्येव ते स्वयम् ।
न हि कस्तूरिकामोदः शपथेन निवार्यते ॥ १३ ॥[t]

n. Pratāpacakravarti. o. Bhāravi.
p. Vallabhadeva. q. Bhavabhūti. r. Bhallaṭa.
s. Mahābhārata. t. Vallabhadeva.

ग्रासाद्गलितसिक्थस्य किं न्यूनं करिणो भवेत् ।
पिपीलिकापि तेनैव स्वं बिभर्ति कुटुम्बकम् ॥ १४ ॥

किं कुलेन विशिष्टेन विपुलेन दुरात्मनाम् ।
क्रिमयः किं न जायन्ते कुसुमेषु सुगन्धिषु ॥ १५ ॥

गुरून् कुर्वन्ति ते वश्यानन्वर्था तैर्वसुन्धरा ।
येषां यशांसि शुभ्राणि ह्रेपयन्तीन्दुमण्डलम् ॥ १६ ॥[u]

पतति व्यसने दैवाद् दारुणे दारुणात्मनि ।
संवर्मयति वज्रेण धैर्येण महतां मनः ॥ १७ ॥[v]

यत् सदृशजनेषु याञ्चा महतां नहि लाघवाय सुहृदर्थे ।
हरिरपि पाण्डुसुतेभ्यः स्वयमर्थी धार्तराष्ट्रेषु ॥ १८ ॥[w]

उपकृत्य भवन्ति दूरतः परतः प्रत्युपकारशङ्कया ।
इयमेव हि सत्त्वशालिनां महतां कापि कठोरचित्तता ॥ १९ ॥[x]

मदसिक्तमुखैर्मृगाधिपः करिभिर्वर्तयति स्वयं हतैः ।
लघयन् खलु तेजसा जगन्न महानिच्छति भूतिमन्यतः ॥ २० ॥[x]

किमवेक्ष्य फलं पयोधरान् ध्वनतः प्रार्थयते मृगाधिपः ।
प्रकृतिः खलु सा महीयसः सहते नान्यसमुन्नतिं यया[1] ॥ २१ ॥[x]

स्पृहणीयगुणैर्महात्मभिश्चरिते वर्त्मनि यच्छतां मनः ।
विधिहेतुरहेतुरागसां विनिपातोऽपि समः समुन्नतेः ॥ २२ ॥[x]

सावलेपमुपलिप्सिते परैरभ्युपैति विकृतिं रजस्यपि ।
अर्थितस्तु न महान् समीहते जीवितं किमु धनं धनायितुम् ॥ २३ ॥[x]

करोति योऽशेषजनातिरिक्तां
    सम्भावनामर्थवतीं क्रियाभिः ।
संसत्सु जाते पुरुषाधिकारे
    न पूरणी तं समुपैति संख्या ॥ २४ ॥[x]

विपदि धैर्यमथाभ्युदये क्षमा
    सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरतिर्व्यसनं श्रुतौ
    प्रकृतिसिद्धमिदं हि महात्मनाम् ॥ २५ ॥[y]

u. Bhāravi. v. Murāri. w. Bhoja. x. Bhāravi. y. Bhartṛhari.

१ यथा- $S_1$.



प्रारभ्यते न खलु विघ्नभयेन नीचैः
    प्रारभ्य विघ्नविहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
    प्रारब्धमुत्तमजना न परित्यजन्ति ॥ २६ ॥[z]

तत्तावदेव शशिनः स्फुरितं गरीयो
यावन्न तिग्मरुचिरम्बरमभ्युपैति ।
अभ्युद्गते सकलधामनिधौ च तस्मि-
न्निन्दोः [1]सिताभ्रशकलस्य च को विशेषः ॥ २७ ॥[a]

लोकोत्तरं चरितमर्पयति प्रतिष्ठां
पुंसां कुलं न हि निमित्तमुदात्ततायाम् ।
वातापितापनमुनेः कलशात्प्रसूति-
र्लीलायितं पुनरमुष्य समुद्रपानम् ॥ २८ ॥[b]

पुंसः पुमान् मलिनजीवितलुब्धवृत्तिः
दैन्यात् प्रणाममपि यः शिरसा करोति ।
कोपाधिकस्फुरितघूर्णितलोचनान्तं
कान्ताजनं किमनुनेष्यति कार्मुकेण ॥ २९ ॥

प्रदानं प्रच्छन्नं गृहमुपगते सम्भ्रमविधिः
प्रियं कृत्वा मौनं सदसि कथनं चाप्युपकृतेः ।
अनुत्सेको लक्ष्म्या अनभिभवनीयाः परकथाः
श्रुतेऽत्यन्तासक्तिः पुरुषमभिजातं कथयति ॥ ३० ॥[c]

क्वचिद् भूमौ शायी क्वचिदपि च पर्यङ्कशयनः
क्वचिच्छाकाहारः क्वचिदपि च शाल्योदनरुचिः ।
क्वचित् कन्थामाली क्वचिदपि च दिव्याम्बरधरो
मनस्वी कार्यार्थी न गणयति दुःखं न च सुखम् ॥ ३१ ॥[c]

इतः स्वपिति केशवः कुलमितस्तदीयद्विषा-
मितोऽपि शरणार्थिनः शिखरिपत्रिणः शेरते ।
इतोऽपि बडबानलः सह समस्तसंवर्त्तकै-
रहो ! विततमूर्जितं भरसहं च सिन्धोर्वपुः ॥ ३२ ॥[c]

z. Mudrārākṣasa. a. Bhallaṭa.
b. Sarasvatīkaṇṭhābharaṇa. c. Bhartṛhari

१ °शशाभ्र° $S_1$. २ न्त° $S_1$.

## ॥ लघुपद्धतिः ॥ १२२ ॥

आबद्धकृत्रिमसटावलितांसभित्ति-
रारोपितो मृगपतेः पदवीं यदि श्वा ।
मत्तेभकुम्भतटपाटनलम्पटस्य
नादं करिष्यति कथं हरिणाधिपस्य ॥१॥

## ॥ कृतज्ञपद्धतिः ॥ १२३ ॥

अयं स कालः सम्प्राप्तो धार्तराष्ट्रोपजीविनाम् ।
निर्वेष्टव्यं मया तत्र प्राणानपरिरक्षता ॥ १ ॥[d]

स ब्रह्मचर्यं चरति स सत्यं भाषते गिरम् ।
तस्य लोकद्वयं पाणौ यः कृतं नावमन्यते ॥ २ ॥

यो हि मित्रेषु कालज्ञः सततं साधु वर्तते ।
तस्य स्यात् सफलं जन्म किं पुनः पूर्वकारिणः ॥ ३ ॥[e]

संस्मरन् भर्तृपिण्डानां दूरविस्मृतबन्धनः ।
व्याघ्रमभ्येति कृपणः श्वापि श्वगणिकेरितः ॥४॥

प्रथमवयसि पीतं तोयमल्पं स्मरन्तः
शिरसि निहितभारा नालिकेरा नराणाम् ।
सलिलममृतकल्पं दद्युराजीवितान्तं
न हि कृतमुपकारं साधवो [1]विस्मरन्ति ॥ ५ ॥

## ॥ उदारपद्धतिः ॥ १२४ ॥

अयं बन्धुः परो वेति गणना लघुचेतसाम् ।
उदारचरितानां तु वसुधैव कुटुम्बकम् ॥ १ ॥

आकारमात्रविज्ञानसम्पादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनानां प्राणिनां गिरः ॥ २ ॥

कर्णस्त्वचं शिबिर्मांसं जीवं जीमूतवाहनः ।
ददौ दधीचिरस्थीनि किमदेयं महात्मनाम् ॥ ३ ॥[f]

d. Mahābhārata. e. Rāmāyaṇa. f. Itihāsasamuccaya.
१ न स्मरन्ति–$S_2$.



स्तुत्या प्रीते महादेवे वरं प्रार्थयते नरः ।
लज्जते तु महासत्त्वो मानमन्यत्र का कथा ॥ ४ ॥

किं बूत नूनकूष्माण्डफलानां के भवन्त्यमी ।
अङ्गुलीदर्शनादेव न जीवन्ति मनस्विनः ॥ ५ ॥

त्यागो गुणो वित्तवतां वित्तं त्यागवतां गुणः ।
परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ॥ ६ ॥

प्रावृण्मेघस्य मालिन्ये दोषः को भूरिवर्षिणः ।
शारदाभ्रस्य शुभ्रत्वं वद कुत्रोपयुज्यते ॥ ७ ॥

स एवैकधुरो नृणां यः कश्चित् त्यागवारिणा ।
निर्मार्ष्टि प्रार्थनापांसुधूसरं मुखमर्थिनाम् ॥ ८ ॥[g]

प्रत्युपकुर्वन् बह्वपि न भवति पूर्वोपकारिणा तुल्यः ।
एकोऽनुकरोति कृतं निष्कारणमेव कुरुतेऽन्यः ॥ ९ ॥

म्रियते याचमानो वै तमनुम्रियते ददत् ।
ददत् सञ्जीवयत्येनमात्मानं च युधिष्ठिर ॥ १० ॥[h]

अधिहस्ते त्वयि न्यस्तं कियत् क्वणति कङ्कणम् ।
एतदेवार्थिहस्तस्थमारावयति रोदसी ॥ ११ ॥

धनबाहुल्यमहेतुः कोऽपि निसर्गेण मुक्तकरः ।
प्रावृषि कस्याम्बुमुचः सम्पत्तिः किमधिकाम्बुनिधेः ॥ १२ ॥

दुष्करं बत कुर्वन्ति सतोऽप्यर्थांस्त्यजन्ति ये ।
वयं चैतान् परित्यक्तुमसतोऽपि न शक्नुमः ॥ १३ ॥

मूर्खो हि न ददात्यर्थं नरो दारिद्र्यशङ्कया ।
प्राज्ञो हि विसृजत्यर्थांस्तयैव ननु शङ्कया ॥ १४ ॥

दातृत्वमेव [1]सर्वेभ्यो गुणेभ्यो भासतेतराम् ।
ज्ञातृत्वसहितं तच्चेत्सुवर्णस्येव सौरभम् ॥ १५ ॥[i]

मणिः शाणोल्लीढः समरविजयी हेतिदलितो
मदक्षीणो नागः शरदि सरिदाश्यानपुलिना ।

g. Vyāsa. h. Mahābhārata. i. Bhoja.
१. °पि°–M.

कलाशेषश्चन्द्रः सुरतमृदिता बालवनिता
तनिम्ना शोभन्ते गलितविभवाश्चार्थिषु नराः ॥ १६ ॥[j]

अस्पृष्टान्यधनः कठोरवचनः जिह्मः परापक्रिया-
गन्धाज्ञः परदारतो विगतदृक् दोषश्रुतौ विश्रवाः।
आत्माधीनमना मनस्वितिलकः तत्त्वं परं संविदां
न स्तुत्यः स कथं भवेद्‌ भवसदुत्तारावतारः कृती ॥ १७ ॥

किं जातोऽसि चतुष्पथे घनतरं छन्नोऽसि किं छायया
छन्नश्चेत्फलितोऽसि किं फलभरैराढ्योऽसि किं संनतः।
हे सद्वृक्ष सहस्व सम्प्रति सखे शाखाशिखाकर्षण-
क्षोभामोटनभञ्जनानि जनतः स्वैरेव दुश्चेष्टितैः ॥ १८ ॥[k]

उपकर्तुं स्थितं द्रव्यं यत्नस्तत्कालसम्भवः।
किमस्ति तालवृन्तस्य मन्दमारुतसङ्ग्रहः ॥ १९ ॥

## ॥ कृपणपद्धतिः ॥१२५॥

कृपणेन समो दाता न भूतो न भविष्यति।
अस्पृशन्नेव [1]वित्तानि परेभ्यो यः प्रयच्छति ॥ १ ॥[l]

शरणं किं प्रपन्नानि विषवत् मारयन्ति किम्।
न त्यजन्ते न भुज्यन्ते कृपणेन धनानि यत् ॥ २ ॥

अक्षरद्वयमभ्यस्तं नास्ति नास्तीति यत्पुरा।
तदिदं देहि देहीति विपरीतमुपस्थितम् ॥ ३ ॥[m]

उभयोर्नास्ति भोगेच्छा परार्थं धनसञ्चयः।
कृपणोदारयोः पश्य तथापि महदन्तरम् ॥ ४ ॥[n]

[2]प्रणामः स्वागतं प्रश्नो गन्तुं हस्तानुकूलता।
अप्रदानस्य चिह्नानि प्रभूनां लुब्धचेतसाम् ॥ ५ ॥

त्यागं भोगं च विना सत्तामात्रेण यदि धनिनः।
वयमपि किमपि न धनिनस्तिष्ठति नः काञ्चनो मेरुः ॥ ६ ॥

j. Bhartṛhari. k. Bhartṛhari.
l. Mānasollāsa. m. Vallabhaeva. n. Sakalavidyādhara.
१ रत्नानि–$S_1$. २ प्रणामस्वागत°–M.



किंशुके किं शुकः कुर्यात् फलितेऽपि बुभुक्षितः।
अदातरि समृद्धेऽपि किं कुर्युरुपजीविनः ॥ ७ ॥

दानोपभोगवर्ज्या या सुहृद्भिर्या न भुज्यते।
पुंसः स्याद्यदि सा लक्ष्मीरलक्ष्मीः कतमा भवेत् ॥ ८ ॥[o]

मरौ नास्त्येव सलिलं कृच्छ्राद्यदि च लभ्यते।
तत्कटु स्तोकमुष्णं च न करोति वितृष्णताम् ॥ ९ ॥[p]

धनिनोप्यदानभोगा गण्यन्ते धुरि महादरिद्राणाम्।
हन्ति न यतः पिपासामतः समुद्रोऽपि मरुरेव ॥ १० ॥[q]

अभ्युपयुक्ताः सद्भिर्गतागतैरहरहः सुनिर्विण्णाः।
कृपणजनसंनिकर्षे संप्राप्यार्थाः स्वपन्तीव ॥ ११ ॥[r]

सञ्चितं क्रतुषु नोपभुज्यते सञ्चितं गुणवतो न दीयते।
तत्कदर्यपरिरक्षितं धनं चोरपार्थिवगृहेषु दृश्यते ॥ १२ ॥

चन्दने विषधरान्सहामहे वस्तु सुन्दरमगुप्तिमत्कुतः।
रक्षितुं वद किमात्मसौरभं सञ्चिताः खदिरकण्टकं [1]त्वया ॥ १३ ॥[o]

विनाप्यर्थै[2]र्वीरः स्पृशति बहुमानोन्नतपदं
समायुक्तोऽप्यर्थैः परिभवपदं याति कृपणः ॥
स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां
द्युतिं सैंहीं किं श्वा धृतकनकमालोऽपि लभते ॥ १४ ॥

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः ॥ १५ ॥

विशालं शाल्मल्या नयनसुभगं वीक्ष्य कुसुमं
शुकस्यासीद्बुद्धिः फलमपि भवेत्तादृशमिति।
चिरं तत्र स्थित्वा फलमपि च काले परिणतं
विपाके तूलोऽन्तः सपदि मरुता सोऽप्यपहृता ॥ १६ ॥[s]

[3]त्वन्मूले पुरुषायुषं गतमिदं देहेन संशुष्यता
क्षोदीयांसमपि क्षणं परमितः शक्तिः कुतः प्राणितुम्।

o. Vallabhadeva. p. Bhallaṭa. q. Sundarapāṇḍya.
r. Pañcatantra. s. Bhallaṭa. t. Bhallata.
१. कास्त्वया – $S_1$. २. र्थैः – SBhg. ३. त – M.

तव स्वस्त्यस्तु विवृद्धिमेहि महतीमद्यापि का नस्त्वरा
कल्याणैः फलितोऽसि तालविटपिन् ! पुत्रेषु पौत्रेषु वा ॥ १७ ॥[t]

अद्यैव श्वः परश्वस्त्रिचतुरदिवसानन्तरं सायमह्नि
प्रतापाह्ले पराह्ले क्षणमिव निवस प्रस्थितोऽभ्येहि भूयः ।
इत्थं रेकातिरेकादविदितकपटप्रक्रियानर्थिजाता-
नत्यर्थं व्यर्थयन्ति प्रतिदिवसमहो राजधान्यां वदान्याः ॥ १८ ॥[t]

लुब्धस्य लुब्धकस्येव मार्गे तु क्षेपकारिणः ।
सहसा रूपभङ्गेन जायते हस्तलाघवम् ॥ १९ ॥

प्रीतिं न प्रकटीकरोति सुहृदि द्रव्यव्ययाशङ्कया
भीतः प्रत्युपकारकारणभयान्नाकृष्यते सेवया ।
मिथ्या जल्पति वित्तमार्गणभयात्स्तुत्यापि न प्रीयते
कीनाशो विभवव्ययव्यतिकरस्तत्रः कथं प्राणिति[?] ॥ २० ॥[t]

## ॥ लक्ष्मीप्रशंसापद्धतिः ॥१२६॥

श्रीर्मङ्गलात् प्रभवति प्रागल्भ्यात् सम्प्रवर्धते ।
दाक्ष्यात् स्वीकुरुते रूपं संयमात् प्रतितिष्ठति ॥ १ ॥

या हि[1] प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्नीतिविदां वेश्म न वृथाप्यभिधावति ॥ २ ॥

यमेवाभ्युपयाति श्रीरुपायपरितोषिता ।
निरुद्विग्ना हि तत्रास्ते न कचग्रहदूषिता ॥ ३ ॥[u]

स श्लाघ्यः स गुणी धन्यः स कुलीनः स बुद्धिमान् ।
स शूरः स च विक्रान्तो यं त्वं देवि निरीक्षसे ॥ ४ ॥[v]

वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं दान्तमत्यन्तं श्रीर्निषेवते ॥ ५ ॥

धृतिः क्षमा दमः शौचं सन्तोषं प्रियवादिता ।
मित्रत्वं चानभिद्रोहः सत्वैताः समिधः श्रियः ॥ ६ ॥[w]

t. Bhallaṭa. u. Pañcatantra. v. Viṣṇupurāṇa.
w. Mahābhārata.
१ पि M. २ कदाचन – M.



गुणवद्भिः सह सङ्गमुच्चैः पदमाप्तुमुत्सुका लक्ष्मीः ।
वीरकरवालवसतिर्ध्रुवमासिधाराव्रतं चरति ॥ ७ ॥[x]

## ॥ लक्ष्मीनिन्दापद्धतिः ॥१२७॥

ऐश्वर्यतिमिरं चक्षुः पश्यन्नपि न पश्यति ।
पश्चाद्विमलतां याति दारिद्र्यगुलिकाञ्जनैः ॥१॥[y]

अत्यार्यमतिदातारं अतिशूरमतिव्रतम् ।
प्राज्ञाभिमानिनं च श्रीर्भयान्नोपसर्पति ॥२॥[z]

नैषा गुणेषु रमते निर्गुणं नावतिष्ठति ।
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ॥३॥[a]

सम्पदेषा जनस्यास्य व्यसनेन समन्विता ।
आशीराशीविषस्येव विषेण सह जायते ॥४॥[b]

या गम्याः सत्सहायानां यासु खेदो भयं यतः ।
तासां कियन्न दुःखाय विपदामिव सम्पदाम् ॥५॥[c]

नान्तरज्ञाः श्रियो जातु प्रियैरासां न भूयते ।
आसक्तास्तास्वमी मूढा वामशीला हि जन्तवः ॥६॥[c]

प्रक्षेप्तुमुदधौ लक्ष्मीं भूयोऽपि वलते मनः ।
किन्तु प्रक्षिप्त एवायं पुनरायाति चन्द्रमाः ॥७॥[d]

वक्रत्वं सहजादिन्दोः कालकूटाच्च मूर्च्छना ।
मादिराया मदो लक्ष्म्या काठिन्यं कौस्तुभात् परम् ॥८॥

न शृण्वन्ति न पश्यन्ति नोत्पश्यन्ति हिताहितम् ।
न विदुः किं विचेष्टन्ते कष्टं श्रीविप्लुता जनाः ॥९॥

पुष्णात्यधिकमूष्माणं हिनस्ति व्यक्तवादिनाम् ।
करोति भवतविद्वेषं विषमः श्रीकृतो ज्वरः ॥१०॥[e]

x. Murāri. y. Vyāsa. z. Vallabhadeva.
a. Pratāpacakravartin. b. Mahābhārata. c. Bhāravi.
d. Murāri. e. Kādambarīkāthāsāra.
१ सार्खि – M.

चलितानेकपुरुषा सुबहूच्छ्रायकारिणी।
श्रीः पिशाचीव संरक्ष्या पणबन्धेन नित्यशः ॥ ११ ॥

काकतालीययोगेन यदनात्मवति क्षणम्।
करोति प्रणयं लक्ष्मीस्तदस्याः स्त्रीत्वचापलम् ॥ १२ ॥[f]

सम्पदो हि मनुष्याणां गन्धर्वनगरोपमाः।
दृश्यमानाः क्षणेनैव भवन्ति न भवन्ति च ॥ १३ ॥[g]

आलिङ्गिताः परैर्यान्ति प्रस्खलन्ति पदेष्वपि।
अव्यक्तानि च भाषन्ते धनिनो मद्यपा इव ॥ १४ ॥

उच्चैः पदमधितिष्ठन् लोकस्तत्त्वेषु मुह्यति प्रायः।
विषममपि पश्यति समं पर्वतशिखराग्रमारूढः ॥ १५ ॥[h]

लक्ष्मीर्नाम परं पुंसामन्यथाभावकारणम्।
विरलास्ते विकाराय न येषां तत्परिग्रहः ॥ १६ ॥

क्रमागतेति नैतस्यामायासः कोऽपि विद्यते।
या हि यत्रेषिता लक्ष्मीस्तत्राद्येव न दृश्यते ॥ १७ ॥

वातरोगाभिभूतेव भिन्नपादेव कण्टकैः।
लक्ष्मीर्निधातुं शक्नोति न क्वचिन्नियतं पदम् ॥ १८ ॥

धूर्तप्रसारिताश्चैव विषयासक्तमानसाः।
अकस्मात् प्रलयं यान्ति गीतरक्ता मृगा इव ॥ १९ ॥[i]

शौर्यमदो भुजमदो श्रीरूपमदो दर्पणादिदर्शी च।
काममदः स्त्रीदर्शी विभवमदस्त्वेव जात्यन्धः ॥ २० ॥

श्रीर्विशृङ्खलखलाभिसारिका वर्त्मभिर्घनतमोमलीमसैः।
शब्दमात्रमपि सोढुमक्षमा भूषणस्य गुणिनः समुत्थितम् ॥ २१ ॥[j]

विपुलहृदयैर्धन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्वाम्ये पुंसां क एष मदज्वरः ॥ २२ ॥[k]

f. Pañcatantra. g. Mahābhārata. h. Vallabhadeva.
i. Kādambarīkathāsāra. j. Bhallaṭa.
k. Bhartṛhari and also in SBhg.



कस्मैचित् कपटाय कैटभरिपूरःपीठदीर्घालयां
देवि त्वामभिवाद्य कुप्यसि न चेत्तत्किञ्चिदाचक्ष्महे।
यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते
नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ २३ ॥[l]

तीक्ष्णादुद्विजते मृदौ परिभवत्रासान्न सन्तिष्ठते
मूर्खान्द्वेष्टि न गच्छति प्रणयितामत्यन्तविद्वत्स्वपि।
शूरेभ्योऽप्यधिकं बिभेत्युपहसत्येकान्तभीरूनपि
श्रीर्लब्धप्रसरेव वेशवनिता दुःखोपचर्या भृशम् ॥ २४ ॥[m]

तत्तादृक् फणिराजरज्जुकषणं संरूढपक्षच्छिदा
घातारुन्तुदमप्यहो कथमयं मन्थाचलः सोढवान्।
एतेनैव दुरात्मना जलनिधेरुत्थाप्य पापामिमां
लक्ष्मीमीश्वर दुर्गतिव्यवहृतिन्यस्तं जगन्निर्मितम् ॥ २५ ॥

शूरं वैधव्यभीता विबुधमतिरुषा विद्ययोत्पादितेर्ष्या
मामत्याक्षीज्जनोऽयं क्वचिदिति सततं मुक्तहस्तं विहाय।
क्लीबं मूर्खं कदर्यं यदि जगति जनं संश्रिता श्रीर्वराकी
तत् किं सा गर्हणीया भवति भुवि सदा कस्य न स्वार्थ इष्टः ॥ २६ ॥

## ॥ राजसेवापद्धतिः ॥ १२८ ॥

वृत्तस्थं वृत्तसम्पन्नं कल्पवृक्षोपमं नृपम्।
अधिगम्य गुणैर्युक्तं सेवेरन्ननुजीविनः ॥ १ ॥[n]

त्यागशीलः प्रभुः सेव्यस्त्यागशीलात्प्रियंवदः।
प्रियंवदाद्विशेषज्ञो विशेषज्ञात्क्षमापरः ॥ २ ॥

आशीविषमिव क्रुद्धं प्रभुं प्राणधनेश्वरम्।
यत्नेनोपचरेन्नित्यं नाहमस्मीति मानवः ॥ ३ ॥[o]

चित्तज्ञः कुरुते यद्यत् तत्तत् सम्पद्यते गुणः।
विभोश्चित्तमजानानः फलभाङ् नैव सेवकः ॥ ४ ॥[p]

l. SBhg. m. Mudrārākṣasa and in SBhg.
n. Kāmandaka. o. Mahābhārata. p. Vallabhadeva.

अविसृष्टोऽपि सन् प्राज्ञः स्ववर्गेण समं व्रजेत् ।
प्रविशेदप्यनाहूतस्त्वन्यथा भर्तुराज्ञया ॥ ५ ॥[q]

न नर्मसचिवैः सार्धं किञ्चिदप्यप्रियं वदेत् ।
ते हि मर्मण्यपि घ्नन्ति प्रहासेनैव संसदि ॥ ६ ॥[q]

कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च ।
आज्ञामवितथां कुर्याद्यथाशक्ति महीपतेः ॥ ७ ॥

नैव लाभाद्दर्पमियान्न व्यथेच्च विमानितः ।
समः पूर्णतुलेव स्याद्यो राजवसतिं वसेत् ॥ ८ ॥[r]

गच्छन्नपि परां भूतिं भूमिपालनियोजितः ।
जात्यन्ध इव मन्येत मर्यादामनुचिन्तयन् ॥ ९ ॥

यन्मिथो भाषितं राज्ञो न कस्मैचित् प्रकाशयेत् ।
यं चासूयन्ति राजानः परुषं न वदेच्च तम् ॥ १० ॥[s]

उच्चमानोऽवलम्बेत परकर्माणि मूकताम् ।
स्वकर्मणि तु माधुर्यं स्थैर्यं बाधिर्यसौष्ठवम् ॥ ११ ॥

आसन्नसेवा नृपतेः क्रीडा शस्त्राहिपावकैः ।
कौशलेनातिमहता विनतैः सानुरुध्यते ॥ १२ ॥

परार्थं देशकालज्ञो देशकाले च साधयेत् ।
स्वार्थं च स्वार्थकुशलः कुशलेनाप्तकारिणा ॥ १३ ॥

अत्यायासेन नात्मानं कुर्यादतिसमुच्छ्रितम् ।
पातो यथा हि दुःखाय नाच्छ्रायः सुखकृत् तथा ॥ १४ ॥

निर्धूतो व्यवधूतोऽपि यो राज्ञां द्वारि तिष्ठति ।
स वै राजश्रियं भुङ्क्ते नाभिमानी कदाचन ॥ १५ ॥[t]

मानावमानावुत्सृज्य यो नृपद्वारि तिष्ठति ।
सोऽचिरेणैव कालेन शत्रूणां मूर्ध्नि तिष्ठति ॥ १६ ॥[u]

q. Kavivallabha. r. Kāmandaka. s. Mahābhārata.
t. Daṇḍanīti u. Mahābhārata.
१ °Sविलंबितम् । –SBhg. २ °मिं –$S_1$.



अहीनकालं राजार्थं स्वार्थं प्रियहितैः सह ।
परार्थं देशकालज्ञो वदेद्धर्मार्थसंहितम् ॥ १७ ॥

नानुशिष्यादपृच्छन्तं महदेतद्धि साहसम् ।
नाचरेदहिते नैनं मूलच्छेदकरं हि तत् ॥ १८ ॥

विपश्चिदपि चित्तज्ञो बालिशोऽपि हि भाववित् ।
अतिप्रियोऽपि द्वेष्योऽपि यात्याशु विपरीतताम् ॥ १९ ॥

मिथः कथनमन्येन केवलां द्वन्द्ववादिताम् ।
वस्त्रादि राज्ञः सदृशं राजलीलां च वर्जयेत् ॥ २० ॥

न यायान्न चिरं तिष्ठेत् क्लेशस्थानावरोधयोः ।
विवेद्य राज्ञे कुर्वीत कार्याणि सुबहून्यपि ॥ २१ ॥

औरसानपि पुत्रांश्च त्यजन्त्यहितकारिणः ।
समर्थान्परिगृह्णन्ति जनानपि नराधिपः ॥ २२ ॥

देवतेव हि सर्वार्थान्कुर्याद्राजा प्रसादितः ।
वैश्वानर इव क्रुद्धः समूलमपि निर्दहेत् ॥२३॥

अप्येव दहनं स्पृष्ट्वा वने तिष्ठन्ति पादपाः ।
राजदोषपरामृष्टा न तिष्ठन्त्यपराधिनः ॥ २४ ॥[v]

एकमेव दहत्यग्निर्नरं दुरुपसर्पिणम् ।
कुलं दहति राजाग्निः सपशुद्रव्यसञ्चयम् ॥ २५ ॥[w]

धर्मार्थसहितं वाक्यं प्रियं वा यदि वाऽप्रियम् !
अपृष्टो न पुमान् ब्रूयाद्यदीच्छेन्न पराभवम् ॥ २६ ॥[x]

शिरोरुहसधर्माणो नरा राजकुलाश्रयाः ।
पतिताः परिभूयन्ते संस्क्रियन्ते पदे स्थिताः ॥ २७ ॥

आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च ।
नेत्रवक्त्रविकाराभ्यां ज्ञायतेऽन्तर्गतं मनः ॥ २८ ॥[y]

इङ्गितज्ञास्तु मगधाः प्रेक्षितज्ञास्तु कोसलाः ।
अर्धोक्ताः चारुपाञ्चाला सर्वोक्ता दक्षिणापथाः ॥ २९ ॥

v. Rāmāyaṇa. w. Mahābhārata. x. Vallabhadeva.
y. Manu 8. 32.

उच्चैः प्रकथनं हासः ष्ठीवनं कुत्सनं तथा।
जृम्भणं गात्रभङ्गश्च पर्वस्फोटं च वर्जयेत् ॥ ३० ॥

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन्।
लभते बुध्यवज्ञानादवज्ञानं च केवलम् ॥ ३१ ॥[z]

वाक्संयमो हि नृपतेः सुदुष्करतमो मतः।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥ ३२ ॥

तुष्टे सरुषि मध्यस्थे स्वामिनि त्रिविधा गुणाः।
दोषा गुणा गुणा दोषा दोषादोषा गुणागुणाः ॥ ३३ ॥

यस्य यस्य हि यो भावस्तेन तेन हि यं नरम्।
अनुप्रविश्य मेधावी क्षिप्रमेव वशं नयेत् ॥ ३४ ॥

सेवामलघ्वीं न च दीर्घदीर्घां न चाङ्कुलग्नां न च दूरसंस्थः।
कुर्वीत भर्तुर्ज्वलनो हि तेषां श्लिष्टोऽङ्गदाही विफलो विकृष्टः ॥ ३५ ॥

विमाननं दुश्चरितानुकीर्तनं कथाप्रसङ्गे वचनेष्वनादरः।
न दृष्टिदानं कृतपूर्वनाशो विरक्तभावस्य नृपस्य लक्षणम् ॥ ३६ ॥

लुब्धे भूभुजि लोभभूः स तु सदा चारे सदाचारवान्
पापे पापरतिर्गुणी गुणवति क्लीबे परं कातरः।
दाता दातरि दुर्जने खलतरः शूरे रणोत्साहवान्
दर्पान्धे मदमूढ एव भवति क्ष्मापालतुल्यो जनः ॥ ३७ ॥

* द्वारे बद्धमुपेक्षते कथमपि प्राप्तं पुरो नेक्षते
विज्ञप्तौ गजमीलनानि कुरुते गृह्णाति वाक्ये छलान्।
निर्याते तु करोति दोषगणनां स्वल्पापराधे यमः
स स्वामी यदि सेव्यते मरुतले किं नः पिशाचैः कृतम् ॥ ३८ ॥

## ॥ राजसेवानिन्दापद्धतिः ॥१२९॥

अपि स्थाणुवदासीनः शुष्यन्परिगतः क्षुधा।
न त्वेवानात्मसम्पन्नाद्वृत्तिमीहेत पण्डितः ॥ १ ॥[a]

* From Sangraha only.
z. Mahābhārata. a. Kāmandaka (SBhg.)
१. गृह°–$S_1$.



सेवादुःखाभिभूतस्य याञ्चा दुःखाय भूयसे।
दीर्घाध्वपरिखिन्नस्य शैलारूढिरिवाम्भसः ॥ २ ॥[b]

सेवा श्ववृत्तिर्यैरुक्ता तैर्न सम्यगुदाहृता।
स्वच्छन्दचारी कुत्र श्वा विक्रीतासुः क्व सेवकः ॥ ३ ॥

सेवादुरामयः पुंसां मरणं फलतुच्छता।
नरकः सत्क्रियाहानिर्नीचसाम्यं तु याचना ॥ ४ ॥

नृपेणाहूयमाणस्य यद्भयं हृदि तिष्ठति।
न तत् तिष्ठति शिष्टानां वने मूलफलाशिनाम् ॥ ५ ॥

रत्नगर्भितमप्यन्तर्मा गाः स्त्रीभिः समाकुलम्।
जातु राजभुजङ्गानां वल्मीकमिव मन्दिरम् ॥ ६ ॥[c]

स्त्रीषु कुर्वन्ति विश्वासं क्रीडन्ति फणिभिः समम्।
राजानमपि सेवन्ते अहो साहसिका नराः ॥ ७ ॥

प्रभूतं धनमालोक्य यो राज्ञां द्वारि तिष्ठति।
स वद्धः सैनिकाश्वेव न शुष्यति न पुष्यति ॥ ८ ॥[d]

चलेषु स्वामिचित्तेषु सुलभे पिशुने जने।
यदि जीवन्त्यहो चित्रं क्षणमप्युपजीविनः ॥ ९ ॥[e]

द्वयं जहाति सेवकः सुखं च मानमेव च।
यदर्थमर्थमीहते तदेव तस्य हीयते ॥ १० ॥

अतिपरिचयादवज्ञा सन्ततगमनादनादरो भवति।
मलये भिल्लपुरन्ध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥ ११ ॥[f]

प्रविशन्ति शङ्कमाना राजगृहं प्रायशो भृत्याः।
तत्क्षणमपि निष्क्रान्ताः कृतदोषा इव विनापि दोषेण ॥ १२ ॥

प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान्।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥ १३ ॥[g]

b. Haribhatta. c. Vallabhadeva. d. Brhātkathā.
e. SBhg. f. Pañcatantra. g. Sūndarapāṇḍya.
१ खण्डमिन्धनं – $S_1$.

आराध्यमानो नृपतिः प्रयत्नात्
आराध्यते नाम किमत्र चित्रम् ।
अयं त्वपूर्वः प्रतिभाविशेषो
यत्सेव्यमानो रिपुतामुपैति ॥ १४ ॥[h]

वयमचतुराः कर्णोपान्ते निवेशयितुं मुखं
सुकृतचरितैर्भर्तुश्चेतो न वञ्चयितुं क्षमाः ।
प्रियमपि वचो मिथ्या वक्तुं जनैर्न तु शिक्षिता
क इव हि गुणो योऽस्मान् कुर्यान्नरेश्वरवल्लभान् ॥ १५ ॥[i]

अलक्ष्मीर्न क्षीणा क्षणमपि न दैन्यं व्यपगतं
न वा भोगा भुक्ताः शममपि गता नार्तिरतुला ।
न बन्धूनामाशा भवति सकलं सम्प्रति यत-
स्तदप्येष श्लोकैः कृपणमबुधः स्तौति सुकविः ॥ १६ ॥

मुग्धो मौनी मधुरवचनो वन्दितुल्यः प्रभूणां
कृत्याकृत्यप्रवचनपरः स्यान्नरो दुर्विदग्धः ।
मन्दप्रेमा विरलगमनो नित्यसेवी विमान्यः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः १७ ॥

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतः
कृतान्धमुखमण्डना यदबुधो जनः सेवितः ॥ १८ ॥[i]

भेतव्यं नृपतेस्ततः सचिवतः राज्ञस्ततो वल्लभा-
दन्येभ्यश्च भवन्ति येऽस्य भवने लब्धप्रसादा विटाः ।
दैन्यादुन्मुखदर्शनापलपनैः पिण्डार्थमायस्यतः
सेवां लाघवकारिणीं कृतधियः स्थाने श्ववृत्तिं विदुः ॥ १९ ॥[j]

न छिन्नौ चरणौ नवा निगलितौ नैवोद्धृते चक्षुषी
जिह्वा दुर्नृपतिस्तुतिव्यसनिनी नैव त्वया दारिता ।
गच्छामस्तव भद्रमस्तु सकलान्यङ्गानि हीनानि मे
लोभो यन्नृपमन्दिरेषु वसतामङ्गैर्निजैर्निर्गमः । २० ॥

h. SBhg. i. Bhartṛhari. j. Mudrārākṣasa (SBhg.).



## ॥ दारिद्र्यनिन्दापद्धतिः ॥ १३० ॥

द्विषन्तमनुवर्तन्ते स्तुवन्ति कृपणं च यत् ।
तद्दुर्भरकृतघ्नस्य जठरस्य विजृम्भणम् ॥ १ ॥

आगमादेव नरकाः श्रूयन्ते रौरवादयः ।
विषयित्वं दरिद्राणां प्रत्यक्षं नरकं विदुः ॥ २ ॥

अहिरण्यमदासीकमल्पान्नाद्यमगोरसम् ।
गृहं कृपणवृत्तीनां नरकस्यापरो विधिः ॥ ३ ॥

किं न खादयते खाद्यं किं न वाचयते वचः ।
किं न कारयते कार्यमहो सर्वंकषा क्षुधा ॥ ४ ॥[k]

दरिद्रस्य परामूर्तिर्याञ्चा न द्रविणाल्पता ।
जरद्गवधनः शम्भुस्तथापि परमेश्वरः ॥ ५ ॥

भ्रमन्तो देहि देहीति भिक्षां प्रति विनिर्गताः ।
अप्रदानस्य माहात्म्यं कथयन्ति स्वमूर्तिभिः ॥ ६ ॥[l]

किमकारि न कार्पण्यं किमकारि न भाषितम् ।
अस्य दग्धोदरस्यार्थे किमकारि न नाटकम् ॥ ७ ॥

वरं हि नरके वासो न तु दुर्विहिते गृहे ।
नरकात् क्षीयते पापं कुगृहादभिवर्धते ॥ ८ ॥

वनानि दहतो वह्नेः सखा भवति मारुतः ।
स एव दीपनाशाय कृशे कस्यास्ति सौहृदम् ॥ ९ ॥[m]

भिक्षयन्ति न याचन्ते देहीति कृपणा जनाः ।
अदत्वा मादृशो माभूर्दत्वा त्वत्सदृशो भव ॥ १० ॥

धर्मार्थकामहीनस्य परकीयान्नभोजिनः ।
काकस्येव दरिद्रस्य दीर्घमायुरनर्थकम् ॥ ११ ॥

शून्यमपुत्रस्य गृहं स हि शून्यो यस्य नास्ति सन्मित्रम् ।
मूर्खस्य दशः शून्याः सर्वं शून्यं दरिद्रस्य ॥ १२ ॥[n]

k. Vallabhadeva. l. Pratāparudra.
m. Bhoja. n. Śūdraka.
१. स्वा°–$S_1$.

अम्बा कुप्यति न मया न स्नुषया साम्बया न मया ।
अहमपि न तया न तया वद राजन् कस्य दोषोऽयम् ॥ १३ ॥

एको हि दोषो गुणसन्निपाते
निमज्जतीन्दोरिव यो बभाषे ।
तेनापि नूनं कविना न दृष्टं
दारिद्र्यमेकं गुणराशिहारी ॥ १४ ॥[o]

विश्वासं न करोति कश्चिदधने नाभाषते सादरः
सम्प्राप्ते गृहमुत्सवेषु धनिना सावज्ञमालोक्यते ।
दूरादेव महाजनः परिहरत्यभ्यर्थनाशङ्कया
मन्ये निर्धनतां प्रकाममपरं कष्टं महापातकम् ॥ १५ ॥

गृध्राः प्रयान्त्येव शवं दग्धाङ्गारिकास्तरुम् ।
न तु दारिद्र्यसंस्पृष्टं कश्चित् स्पृशति पूरुषम् ॥ १६ ॥

शीतलैर्दीर्घनिद्रैश्च निरुच्छ्वाससुखैः शवैः ।
दरिद्रस्तावदुन्निद्रः सोच्छ्वासः स्पर्धते कथम् ॥ १७ ॥

तृणाल्लघुतरस्तूलस्तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं प्रार्थयेदिति ॥ १८ ॥

वासश्चर्मविभूषणं शवशिरो भस्माङ्गरागः सदा
गौरेकः स च लाङ्गलेष्वकुशलः सम्पत्तिरेतावती ।
ईशस्येत्यवमत्य याति जलधिं रत्नाकरं जाह्नवी
कष्टं निर्धनिकस्य जीवितमहो दारैरपि त्यज्यते ॥ १९ ॥

## ॥ आशापद्धतिः ॥ १२१ ॥

आशाखनिरगाधेयं दुष्पूरा केन पूर्यते ।
सा[1] महद्भिरपि क्षिप्तैः पूरकैरेव खन्यते ॥ १ ॥[p]

अणुमात्रं मनस्तस्मिन्नाशा नाम लतोत्थिता ।
यस्या नालमुपघ्नाय भुवनानि चतुर्दश ॥ २ ॥

o. Sṛṅgāraprakāśa.
p. Vallabhadeva. ( SBhg -तृष्णाखनि-).
१. या-M.



आशा नाम मनुष्याणां काचिदाश्चर्यशृङ्खला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति कुत्रचित् ॥ ३ ॥[q]

आशाया दासा ये दासास्ते सर्वलोकस्य ।
आशा दासी येषां तेषां दासायते लोकः ॥ ४ ॥[r]

आशा नाम नदी मनोरथजला तृष्णातरङ्गाकुला
रागग्राहवती वितर्कविहगा धैर्यद्रुमध्वंसिनी ।
मोहावर्तसुदुस्तरातिगहना प्रोत्तुङ्गचिन्तातटी
तस्याः पारगता विशुद्धमनसो नन्दन्ति योगीश्वराः ॥ ५ ॥[s]

हते भीष्मे हते द्रोणे कर्णे च निधनं गते ।
आशा बलवती राजन् शल्यो जेष्यति पाण्डवान् ॥ ६ ॥[t]

आशापिशाचिकाविष्टः पुरतो यस्य कस्यचित् ।
वन्दते निन्दति स्तौति रोदिति प्रहसत्यपि ॥ ७ ॥[u]

एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहग्रस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ ८ ॥[v]

खलोल्लापाः सोढाः कथमपि तदाराधनतया
निगृह्यान्तर्बाष्पं हसितमपि शून्येन मनसा ।
कृतश्चित्तस्तम्भः प्रतिहतधियामञ्जलिरपि
त्वमाशे मोघाशे किमु परमितो नर्तयसि माम् ॥ ९ ॥[w]

निरानन्दा दारा व्यसनविमुखो बान्धवजनो
जडीभूतं मित्रं धनविरहशीर्णः परिजनः ।
असन्तुष्टं चेतः कुलिशकठिनं जीवितमिदं
विधिर्वामारम्भस्तदपि च मनो वाञ्छति सुखम् ॥ १० ॥

## ॥ तृष्णापद्धतिः ॥ १२२ ॥

तृष्णे त्वमसि रागान्धा त्रिषु स्थानेषु रंज्यसि ।
व्याधितेष्वनपत्येषु जरापरिणतेषु च[1] ॥ १ ॥[x]

q. Bhartṛhari. r. SBhg. s. Bhārtṛhari.
t. Mahābhāratas. u. Bṛhatkathā. v. Dhvanyāloka.
w. Bhartṛhari. x. Mahābhārata.
१ पू°-$S_1$.

माने नेच्छति वारयत्युपशमे क्ष्मामालिखन्त्यां ह्रियां
स्वातन्त्र्ये परिवृत्य तिष्ठति करौ व्याधूय धैर्ये गते
तृष्णे त्वामनुबध्नता फलमियत्प्राप्तं जनेनामुना
यः स्पृष्टो न पदा स एव चरणौ स्प्रष्टुं न संमन्यते॥ २ ॥[y]

जीर्यन्ति जीर्यतः केशा दन्ता जीर्यन्ति जीर्यतः ।
चक्षुःश्रोत्रे च जीर्येते तृष्णैका तरुणायते ॥ ३ ॥[z]

व्याधीनामाकरस्तोयं[1] पापानामाकरः स्त्रियः ।
दुःखानामाकरः क्रोधः तृष्णा परिभवाकरः ॥ ४ ॥[a]

यौवनं जरया ग्रस्तमारोग्यं व्याधिभिः क्षतम् ।
जीवितं मृत्युरत्येति तृष्णैका निरुपद्रवा ॥ ५ ॥[b]

मनोरथरथारूढं युक्तमिन्द्रियवाजिभिः ।
भ्राम्यते हि जगत् सर्वं तृष्णासारथिचोदितम् ॥ ६ ॥[c]

नास्त्यन्या तृष्णया काचित्समा स्त्री विषमा क्वचित् ।
या प्राणानपि मुष्णाति तथापि भवति प्रिया ॥ ७ ॥

तृष्णे लोकत्रयस्यास्य निर्वेदपरिपन्थिनी ।
यैस्त्वं निर्माल्यवत् त्यक्ता तेऽत्यन्तं सुखिनो नराः ॥ ८ ॥[1d]

आसन्नान् पुरतो भोगान् दर्शयित्वा पुरः पुरः ।
छागो हरितमुष्ट्येव दूरं नीतोऽस्मि तृष्णया ॥९॥[e]

आशागर्तः प्रतिप्राणि यस्मिन् विश्वमणूपमम् ।
कस्य किं कियदायाति वृथा सा विषयैषिता ॥ १० ॥[e]

आशाखनिरगाधेयमधःकृतजगत्त्रया ।
उद्धृत्योद्धृत्य तत्रस्थानहो सद्भिः समीकृता ॥ ११ ॥[e]

गिरिर्महान्गिरेरब्धिः महानब्धेर्नभो महत् ।
नभसोऽपि महद्ब्रह्म ततोऽप्याशा गरीयसी ॥ १२ ॥

तृष्णे कष्टेऽपि ते शक्तिर्दुष्टा कष्टेषु का कथा ।
त्रैलोक्यव्यापि यद्रूपं यत्त्वया वामनीकृतम् ॥ १३ ॥

---

y. Bhallaṭa. z. Bhartṛhari. a. Prātāparudra.
b. Pañcatantra. c. Vallabhadeva.
d. Vallabhadeva. e. Bhojaraja.
१. रं तोय°–$S_1$.



उत्खातं निधिशङ्कया क्षितितलं ध्माता गिरेर्धातवो
निस्तीर्णः सरितां पतिर्नृपतयो यत्नेन सन्तोषिताः ।
मन्त्राराधनतत्परेण मनसा नीताः श्मशाने निशाः
प्राप्तः काणवराटकोऽपि न मया तृष्णे सकामा भव ॥ १४ ॥[f]

उन्नत्यै नमति प्रभुं प्रभुगृहं द्रष्टुं बहिस्तिष्ठति
स्वद्रव्यव्ययमातनोति हतधीरागामिवित्ताशया ।
प्राणान्प्राणितुमेव मुञ्चति रणे क्लिश्नाति भोगेच्छया
सर्वं तद्विपरीतमेव कुरुते तृष्णान्धदृक् सेवकः ॥ १५ ॥[g]

भ्रान्तं देशमनेकदुर्गविषमं प्राप्तं न किञ्चित्फलं
त्यक्त्वा जातिकुलाभिमानमुचितं सेवा कृता निष्फला ।
भुक्तं मानविवर्जितं परगृहेष्वाशङ्कया काकव-
त्तृष्णे जृम्भसि पापकर्मनिरते नाद्यापि सन्तुष्यसि ॥ १६ ॥[h]

## ॥ याच्ञापद्धतिः ॥ १३२ ॥

अदृष्ट[1]मुखभङ्गस्य युक्तमन्धस्य याचितुम् ।
अहो बत महत्कष्टं चक्षुष्मानपि याचते ॥ १ ॥

मरणान्नापरं दुःखमस्तीत्युक्तं महर्षिभिः ।
कुतः परगृहद्वारे न क्षणं तैरवस्थितम् ॥ २ ॥

गौरवं किं नु मृतके जानेऽहं तत्र कारणम् ।
लाघवस्यार्थिता मूलं सा मृतस्य न विद्यते ॥ ३ ॥[i]

सद्दशात् पुरुषं सद्यः पातयन्तीमधस्तराम् ।
कथयन्ति कथं प्राज्ञा याच्ञां लाघवकारिणीम् ॥ ४ ॥

अहन्यहनि भूतानि सृजत्येव प्रजापतिः ।
अद्यापि न सृजत्येकं योऽर्थिनं नावमन्यते ॥ ५ ॥

कण्ठगद्गदता स्वेदो मुखवैवर्ण्यवेपथू ।
म्रियमाणस्य लिङ्गानि यानि तान्येव याचके ॥ ६ ॥[j]

---

f. Bhartṛhari. g. Govindabhaṭṭa. h. Bhartṛhari.
i. Bhoja. j. Vallabhadeva.
१. °दुः°–M.

तावद्यशस्वी मेधावी प्राज्ञः शूरः कुलोद्भवः ।
पुमानित्युच्यते तावत् यावन्मानान्न हीयते ॥ ७ ॥

तृणाल्लघुतरस्तूलः तूलादपि च याचकः ।
वायुना किं न नीतोऽसौ मामयं याचयेदिति ॥ ८ ॥[k]

विद्वत्ता समरे शौर्यमाभिजात्यं सुशीलताम् ।
खिलीकरोति याञ्चैका दुःशीलेवाङ्गना कुलम् ॥ ९ ॥

अन्तःसारोऽपि निर्याति नूनमर्थितया सह ।
अन्यथा तदवस्थस्य महिमा केन [1]देहिनाम् ॥ १० ॥

मया निवार्यमाणोऽपि भजते प्रार्थनामयम् ।
इति लज्जितया मन्ये लज्जयार्थी निराकृतः ॥ ११ ॥

सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम् ।
अच्युतकथेव दुरितं गुणशतमर्थिता हरति ॥ १२ ॥[l]

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं सोऽपि विश्रामः ॥ १३ ॥[m]

याचना हि पुरुषस्य महत्त्वं नाशयत्यखिलमेव तथाहि ।
सद्य एव भगवानपि विष्णुर्वामनो भवति याचितुमिच्छन् ॥ १४ ॥[n]

## ॥ संसर्गगुणपद्धतिः ॥१३३॥

त्यज्यते यदि दोषेण गुणेन परिगृह्यते ।
सर्वसाधारणार्थोऽयमाश्रयस्य कुतः फलम् ॥ १ ॥[o]

गुणैः स शर्वकल्पोऽपि सीदत्येव निराश्रयः ।
अनर्घमपि माणिक्यं हेमाश्रयमपेक्षते ॥ २ ॥[p]

समाश्रयबलादेव गरुडं यान्तमध्वनि ।
पिनाकपाणिपाणिस्थः कुशलं पृष्टवानहिः ॥ ३ ॥

गुणवत्सु गुणाल्पोऽपि याति विस्तीर्णतां हरः ।
पतितः स्वादुविमले तैलबिन्दुरिवाम्भसि ॥ ४ ॥

k. Vikramāditya. l. Sundarapāṇḍya. m. Pañcatantra.
n, Vallabhadeva. o. Rāmāyaṇa. p. Vallabha.
१. गच्छति–M.



विद्वद्भिरभिसम्बन्धादधमो भाजनं भवेत् ।
पाषाणोऽपि मणिस्पर्शाज्जायते भूषणं परम् ॥ ५ ॥

प्रसिद्धिहेतुर्भावानां प्रायः श्रेष्ठपरिग्रहः ।
सहस्रं जलधौ शङ्खाः पाञ्चजन्यस्तु विश्रुतः ॥ ६ ॥[q]

गुणवज्जनसंसर्गाद्याति स्वल्पोऽपि गौरवम् ।
पुष्पमालानुषङ्गेण सूत्रं शिरसि धार्यते ॥ ७ ॥

प्रबलतरतरङ्गैर्दूरमुत्सारितोऽपि
प्रथयति तव कीर्तिं दक्षिणावर्तशङ्खः ।
परिकलय पयोधे पद्मनाभा[1]र्घयोग्य-
स्तव निकटनिषण्णैः क्षुल्लकैः श्लाघ्यता का ॥ ८ ॥

महानुभावसंसर्गः कस्य नोन्नतिकारणम् ।
इन्दोः शिवशिरःसङ्गात् कलापि ह्यभिनन्द्यते ॥ ९ ॥

सम्पर्केण सतां प्रायः पात्रतां यात्यसन्नपि ।
रथ्यातोयमपि प्राप्य गङ्गां याति पवित्रताम् ॥ १० ॥[r]

गुणः कृशोऽपि प्रथते पृथुरप्यपचीयते ।
प्राप्य साधुखलौ चन्द्रः पक्षाविव सितासितौ ॥ ११ ॥[s]

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः ।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः ॥ १२ ॥[t]

ख्याता नराधिपतयः कविसंश्रयेण
राजाश्रयेण च गताः कवयः प्रसिद्धिम् ।
राज्ञा समोऽस्ति न कवेः परमोपकारी
राज्ञो न चास्ति कविना सदृशः सहायः ॥ १३ ॥

वासवपरिसण्ठिणए विगुणपरिहीणो करेइ किं विउणो ।
जअं अद्धस्स वरं वो हत्यिठिओ णिप्पलं चेअम् ॥ १४ ॥

हंसा ण सरेहि विणा सराण सोहा विणा ण हंसेहि ।
अण्णोण्णच्चिअ एए अप्पाणवर गरू अन्ति ॥ १५ ॥[u]

q. Abbinavagupta. r. Pratāparudra.
s. Kādambarī kathāsāra. t. Kālidāsa. u. Gāthākośa.
१. र्थ°–$S_1$.

## ॥ संसर्गदोषपद्धतिः ॥ १३४ ॥

असत्सम्पर्कदोषेण सज्जनोऽपि विगर्ह्यते ।
मार्गस्तिमिरसम्पर्कात् समोऽपि विषमायते ॥ १ ॥

महानप्यल्पतां याति निर्गुणे गुणवानपि ।
आधाराधेयभावाच्च गजेन्द्र इव दर्पणे ॥ २ ॥

असज्जनेन संसर्गादनयं यान्ति साधवः ।
मधुरं शीतलं तोयं पावकं प्राप्य निर्गुणम् ॥ ३ ॥

तिलाश्चम्पकसंश्लेषात् प्राप्नुवन्त्यधिवासनाम् ।
रसोनभक्षास्तद्गन्धाः सर्वे सांसर्गिका गुणाः ॥ ४ ॥

अपां प्रवाहो गाङ्गोऽपि समुद्रं प्राप्य तद्रसः ।
भवत्यवश्यं तद्विद्वान्नाश्रयेदशुभाः स्वयम् ॥ ५ ॥[w]

संश्रयस्याभिसम्बन्धाद्गुणवानपि दूष्यते ।
रात्रौ वल्मीकसम्बन्धाद्रज्जुः सर्पायते किल ॥ ६ ॥[v]

असन्त्यागात् पापकृतामपापा-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावात्
तस्मात् पापैः सह सन्धिं न कुर्यात् ॥ ७ ॥

यदि सन्तं सेवते यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रागवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ ८ ॥[x]

अहं मुनीनां वचनं शृणोमि
गवाशनानां स वचः शृणोति ।
प्रत्यक्षमेतद् भवतापि दृष्टं
संसर्गजा दोषगुणा भवन्ति ॥ ९ ॥[x]

क्वचिदपि वस्तुविशेषे दोषोऽपि गुणेन तुल्यतां याति ।
मण्डनमेव हि खण्डनमधरतले भवति रमणीनाम् ॥ १० ॥

v. Kāmandaka. w. Pratāparudra. x. Mahābhārata.
१ अथ–M.



## ॥ सामान्यपद्धतिः ॥ १३५ ॥

अनुगन्तुं सतां वर्त्म यदि कृत्स्नं न शक्यते ।
स्वल्पमप्यनुगन्तव्यं मार्गस्थो नावसीदति ॥ १ ॥

यदशक्यं न तदच्छक्यं यच्छक्यं शक्यमेव तत् ।
नोदके शकटं याति न नौर्वा गच्छति स्थले ॥ २ ॥

द्वावम्भसि विनिक्षेप्यौ गाढं बद्ध्वा गले शिलाम् ।
धनिनं चाप्यदातारं दरिद्रं चातपस्विनम् ॥ ३ ॥

धनमस्तीति वाणिज्यं किञ्चिदस्तीति कर्षणम् ।
सेवां न किञ्चिदस्तीति नाहमस्मीति साहसम् ॥ ४ ॥

नोदन्वानर्थितामेति न चाम्भोभिर्न पूर्यते ।
आत्मा तु पात्रतां नेयः पात्रमायान्ति सम्पदः ॥ ५ ॥

राजानं चैव सर्पं च ब्राह्मणं च बहुश्रुतम् ।
नावमन्येत वै भूष्णुः कृशानपि कदाचन ॥ ६ ॥

ते धन्या ये न पश्यन्ति देशभङ्गं कुलक्षयम् ।
परहस्तगतान्दारान्मित्रं च व्यसनातुरम् ॥ ७ ॥

असिधाराक्रमाक्रान्ता वरमेकापि काकिणी ।
न परभ्रूविनिर्दिष्टा सागरान्तापि मेदिनी ॥ ८ ॥

परदारा न गन्तव्याः सर्ववर्णेषु कर्हिचित् ।
नहीदृशमनायुष्यं यदन्यस्त्रीनिषेवणम् ॥ ९ ॥

प्रज्ञया मानसं दुःखं हन्याच्छारीरमौषधैः ।
एतद्विज्ञानसामर्थ्यं न बालैः समतामियात् ॥ १० ॥

दुःखे दुःखाधिकान्पश्येत्सुखे पश्येत्सुखाधिकान् ।
आत्मानं शोकहर्षाभ्यां शत्रुभ्यामिव नार्पयेत् ॥ ११ ॥

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन्विब्रुवन्वापि नरो भवति किल्बिषी ॥ १२ ॥[z]

y. Tantropākhyāna. z. Vijñāneśvara.
१ °र्वं°–M.

परनिन्दासु पाण्डित्यं स्वेषु कार्येष्वनुद्यमः ।
प्रद्वेषश्च गुणज्ञेषु पन्थानो ह्यापदां त्रयः ॥ १३ ॥

ये तु निष्ठाः सुनियताः सत्याचारपरायणाः ।
धन्यं पन्थानमारूढास्तेषां वृत्तं समाचरेत् ॥ १४ ॥

शक्त्या च दानं सततं तितिक्षा दम आर्जवम् ।
यथार्हं प्रतिपूजा च शास्त्रमेतदनाकुलम् ॥ १५ ॥

यच्छक्त्या[1] अप्युपेक्षन्ते कदाचिदपकारिणम् ।
समूलकाषं कषितुमुपायो नैव मूढता ॥ १६ ॥[a]

आयुषः क्षण एकोऽपि न लभ्यं स्वर्णकोटिभिः ।
स वृथा नीयते येन प्रमादः सुमहानयम् ॥ १७ ॥

महानहमिति न्यूनो महासत्त्वं न चालयेत् ।
निष्पिनष्टि गजं चापि पाणिना किं न केसरी ॥ १८ ॥

अप्युन्मत्तात्प्रलपतो बालाच्च परिसर्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ १९ ॥[b]

दैवयोगादुपात्ता हि प्रज्ञाहीनस्य सम्पदः ।
अकस्मादेव नश्यन्ति खलानामिव सङ्गतम् ॥ २० ॥[c]

अनादरभृतां सेवां दाम्पत्यं प्रेमवर्जितम् ।
मैत्रीं च हेतुसापेक्षां चेतना नाधिकुर्वते ॥ २१ ॥[d]

न्यायार्जितस्य वित्तस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ २२ ॥

अनृतं च समुत्कर्षे राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ २३ ॥[e]

आत्मानं नावमन्येत पूर्वाभिरसमृद्धिभिः ।
आमृत्योः श्रियमन्विच्छेन्नैनां मन्येत दुर्लभाम् ॥ २४ ॥[f]

यं प्रशंसन्ति गणिका यं प्रशंसन्ति गायकाः ।
यं प्रशंसन्ति कितवास्तमाहुः पुरुषाधमम् ॥ २५ ॥

a, Vallabhadeva. b. Mahābhārata. c. Vallabhadeva.
d. Mammaṭa. e. Manu. f. Manu.
१ क्ता– $S_1$.



अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ २६ ॥

अपहृत्य परस्यार्थं यः परेभ्यः प्रयच्छति ।
स दाता नरकं याति यस्यार्थस्तस्य तत्फलम् ॥ २७ ॥

पूर्वे वयसि यः शान्तः स शान्तः इति मे मतिः ।
धातुषु क्षीयमाणेषु शमः कस्य न जायते ॥ २८ ॥

क्षत्रिये सङ्गतिर्नास्ति न प्रीतिर्न च सौहृदम् ।
कारणे सान्त्वयन्त्येते कृतार्थाः सन्त्यजन्ति च ॥ २९ ॥

सर्वेषामेव शौचानामर्थशुद्धिर्विशिष्यते ।
योऽर्थे शुचिः स हि शुचिर्न मृद्वारिशुचिः शुचिः ॥ ३० ॥[g]

कृतस्य करणं नास्ति प्रागेवातः परीक्ष्यताम् ।
अविचिन्त्य कृतं सर्वं पश्चात्तापाय कल्पते ॥ ३१ ॥

मूर्खशिष्योपदेशेन दुष्टस्त्रीभरणेन च ।
द्विषतां सम्प्रयोगेण पण्डितोऽप्यवसीदति ॥ ३२ ॥[h]

यस्य पुत्रो वशी भर्तुर्भार्या छन्दोऽनुवर्त्तिनी ।
विभवे सति सन्तोषः स्वर्गस्तस्य इहैव हि ॥ ३३ ॥[i]

प्रत्यक्षे गुरवः स्तुत्याः परोक्षे मित्रबान्धवाः ।
कर्मान्ते दासभृत्याश्च पुत्रा नैव मृताः स्त्रियः ॥ ३४ ॥

वयसः कर्मणोऽर्थस्य श्रुतस्याभिजनस्य च ।
वेषवाग्वृत्तिसारूप्यमाचरन्विचरेदिह ॥ ३५ ॥

येनास्य पितरो याता येन याताः पितामहाः ।
तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति ॥ ३६ ॥[j]

मय्येव जीर्णतां यातु यत्त्वयोपकृतं मम ।
नरः प्रत्युपकारार्थी विपत्तिमनुकांक्षति ॥ ३७ ॥[k]

गणाद्गृह्णन्प्रवर्द्धेत गणस्यापि न किञ्चन ।
गणप्रदाता हीयेत गणस्यापि न किञ्चन ॥ ३८ ॥[l]

g. Manu. h. Nītiśāstra. i. Manu. j. Manu.
k. Vasiṣṭha. l. Vallabhadeva.

सकृद्‌दंशो निपतति सकृत्कन्या प्रदीयते ।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत् ॥ ३९ ॥[m]

सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वित्तेन रक्ष्यते ॥ ४० ॥[m]

सम्प्रीतिभोज्यान्यन्नानि ह्यापद्भोज्यानि वा पुनः ।
न च सम्प्रीयसे राजन् न चाप्यापद्गता वयम् ॥ ४१ ॥[n]

न हि जानपदं दुःखं एकः शोचितुमर्हति ।
अन्यभावेन युज्येत तच्चास्य न निवर्तते ॥ ४२ ॥

नहीदृशं संवननं त्रिषु लोकेषु विद्यते ।
मैत्री च सर्वभूतेषु दानं च मधुरा च वाक् ॥ ४३ ॥

किं काकिणी कः पुरुषः सहस्रं नाधिगच्छति ।
तथैव किं मुहूर्तोऽपि विद्यापारं न गच्छति ॥ ४४ ॥

कल्याणी बत गाथेयं लौकिकी प्रतिभाति मे ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥ ४५ ॥[o]

नालम्बते दैष्टिकतां न निषीदति पौरुषे ।
शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते ॥ ४६ ॥[p]

अभिद्रोहेण भूतानामार्जयन् गत्वरीः श्रियः ।
उदन्वानिव सिन्धूनामापदामेति पात्रताम् ॥ ४७ ॥[q]

नक्रः स्वस्थानमासाद्य गजेन्द्रमपि कर्षति ।
स एव प्रच्युतः स्थानात् शुनापि परिभूयते ॥ ४८ ॥

विषादप्यमृतं ग्राह्यममेध्यादपि काञ्चनम् ।
नीचादप्युत्तमां विद्यां स्त्रीरत्नं दुष्कुलादपि ॥ ४९ ॥

गुणेषु यत्नः क्रियतां किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिः गावः क्षीरविवर्जिताः ॥ ५० ॥

अभ्रच्छाया तृणाग्निश्च नीचसेवाऽध्वटे जलम् ।
वेश्यागारः खलप्रीतिः सर्वं बुद्बुदसन्निभम् ॥ ५१ ॥[r]

---

m. Manu. n. Mahābhārata. o. Rāmāyaṇa.
p. Māgha. q. Bhāravi. r. Vallabhadeva.



अतस्करकरग्राह्यमराजाज्ञावशंवदम् ।
अदायादविभागार्हं धनमार्जय तत् स्थिरम् ॥ ५२ ॥[s]

कार्यगते वैचित्र्यान्नीचोऽपि क्वचिदलं न जातु महान् ।
कांस्येनैवादर्शः क्रियते राज्ञामपि न हेम्ना ॥ ५३ ॥[t]

अप्रियमुक्ताः पुरुषाः प्रयतन्ते द्विगुणमप्रियं वक्तुम् ।
तस्मादवाच्यमप्रियमप्रियमश्रोतुकामेन ॥ ५४ ॥

गन्तव्यं राजकुलं द्रष्टव्या राजसंमताः पुरुषाः ।
यद्यपि न भवन्त्यर्थाः भवन्त्यनर्थप्रतीकाराः ॥ ५५ ॥

सुहृदि निरन्तरचित्ते गुणवति भृत्ये प्रियासु नारीषु ।
स्वामिनि शक्तिसमेते निवेद्य दुःखं सुखी भवति ॥ ५६ ॥[u]

भ्रातरि विपरीतमतिर्मातरि चौर्यं पितर्यनृतवादः ।
राजनि करस्य भेदो मरणाय यतात्मनां भवति ॥ ५७ ॥[v]

प्राप्य चलानधिकारांश्छत्रुषु मित्रेषु बन्धुवर्गेषु ।
नापकृतं नोपकृतं न सत्कृतं किं कृतं तेन ॥ ५८ ॥

अविधेयो भृत्यजनः शठानि मित्राणि दायकः स्वामी ।
अविनयमहिमा भार्या दुष्कृतमूलानि चत्वारि ॥ ५९ ॥

कुलजोऽयं गुणवानिति विश्वासो न क्षमः खलप्रकृतौ ।
ननु मलयचन्दनादपि समुत्थितोऽग्निर्दहत्येव ॥ ६० ॥

विगतज्वरमिव हृदयं गात्रं लघुतरमिवावसितभारम् ।
तीर्णार्णवस्य च सुखं मनो भवत्यवसितप्रतिज्ञस्य ॥ ६१ ॥[w]

असतोऽपि भवति गुणवान् सद्भ्योऽपि भवन्त्यसद्वृत्याः ।
पङ्कादुदेति कमलं क्रिमयः कमलादपि भवन्ति ॥ ६२ ॥[x]

वश्याः सुता वृत्तिकरी च विद्या
नीरोगता सज्जनसङ्गतिश्च ।
इष्टा च भार्या वशवर्तिनी च
दुःखस्य मूलोद्धरणानि पञ्च ॥ ६३ ॥[y]

---

s. Sakalavidyādhara. t. Pañcatantra.
u. Sundarapāṇḍya. v. Vallabhadeva.
w. Sundarapāṇḍya x. Ravigupta. y. Daṇḍanātha.

द्वे एव लोके शुचिमप्रमत्तं
बलादकार्ये विनियोजयेते ।
नीचाभिमानप्रभवो हि मन्युः
क्षुधावसन्नं च गृहे कलत्रम् ॥ ६४ ॥

इदमेव हि पाण्डित्यमियमेव विदग्धता ।
अयमेव परो धर्मो यदायान्नाधिको व्ययः ॥ ६५ ॥

कः कालः कानि मित्राणि को देशः कौ व्ययागमौ ।
कस्याहं का च मे शक्तिरिति चिन्त्यं मुहुर्मुहुः ॥ ६६ ॥

तर्कोऽप्रतिष्ठः श्रुतयो विभिन्ना
न चानृषेर्दर्शनमस्ति किञ्चित् ।
धर्मस्य तत्त्वं निहितं गुहायां
महाजनो येन गतः स पन्थाः ॥ ६७ ॥

न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥ ६८ ॥

निम्नेन तोयं हरितेन गावः
सान्त्वेन बाला विनयेन सन्तः ।
अर्थेन नारी तपसा हि देवाः
सर्वो हि लोके ह्रियते प्रियेण ॥ ६९ ॥

सत्यं च धर्मं च पराक्रमं च
भूतानुकम्पां प्रियवादितां च ।
द्विजातिदेवातिथिपूजनं च
पन्थानमाहुस्त्रिदिवस्य सन्तः ॥ ७० ॥

शास्त्रेषु निष्ठा सहजश्च बोधः
प्रागल्भ्यमभ्यस्तगुणा च वाणी ।
कालानुरोधः प्रतिभानवत्त्व-
मेते गुणाः कामदुघाः क्रियासु ॥ ७१ ॥[z]

z. Bhavabhūti.



यशस्करे कर्मणि मित्रसङ्ग्रहे
प्रियासु नारीष्वधनेषु बन्धुषु ।
क्रतौ विवाहे व्यसने रिपुक्षये
धनक्षयोऽष्टासु न गण्यते बुधैः ॥ ७२ ॥[a]

कुचेलिनं[1] दन्तमलप्रधारिणं
बह्वाशिनं निष्ठुरभाषिणं च ।
सूर्योदये चास्तमये च शायिनं
विमुञ्चति श्रीरपि चक्रपाणिनम् ॥ ७३ ॥[b]

शिरः सुपुष्पं चरणौ सुपूजितौ
वराङ्गनासेवनमल्पभोजनम् ।
अनग्नशायित्वमपर्वमैथुनं
श्रियः प्रणष्टाः पुनराश्रयन्ति ॥ ७४ ॥

पुंसः स्वरूपविनिरूपणमेव रम्यं
तज्जन्मरूपविनिरूपकथा वृथैव ।
कः कालकूटमभिनन्दति सागरोत्थं
को वारविन्दमपि निन्दति पङ्कजातम् ॥ ७५ ॥

माधुर्यं प्रमदाजने सुललितं दाक्षिण्यमार्ये जने
शौर्यं शत्रुषु मार्दवं गुरुजने धर्मिष्ठता साधुषु ।
धर्मज्ञेष्वनुवर्तनं बहुविधं मानं जने गर्विते
शाठ्यं पापजने नरस्य कथिताः पर्याप्तमष्टौ गुणाः ॥ ७६ ॥[c]

## ॥ अन्यापदेशपद्धतिः ॥ १३६ ॥

अनुभवतु नाम भृङ्गः कुरवककुन्दार्कसम्भवं कुसुमम् ।
किं तत्प्रथयति लोके विकसज्जातिप्रसूनसौभाग्यम् ॥ १ ॥
दूरतया स्थूलतया नीलतया दानलोलुपैर्मधुपैः ।
धावितमिभराजधिया हन्तासीदन्ततो महिषः ॥ २ ॥

a. Mahābhārata. b. Pañcatantra.
c. Pañcatantra.

१ कुचेऽभिवन्दन्तमलप्रधारिणं–$S_1$.

दानार्थिनो मधुकराः खलु कर्णतालै-
दूरीकृताः करिवरेण मदान्धबुद्ध्या ।
तस्यैव गण्डयुगमण्डनहानिरेषा
भृङ्गाः पुनर्विकचपद्मवने चरन्ति ॥ ३ ॥

इन्द्रो गोत्रभिदेवासीत् गोत्रोद्धरणपेशलः ।
उपेन्द्रो वन्द्यते तस्मात् किं पौर्वापर्यचिन्तया ॥ ४ ॥

विधिना परिहृत्य चूतवीथीं
विचरन्वायससङ्कुले वनान्ते ।
परितः पिचुमन्दवाटिकायां
कलकण्ठः करुणां दशामयासीत् ॥ ५ ॥

आरामानपहाय किं क्षितिभृतां शुद्धान्तमुग्धाङ्गना-
हस्तानीतनवाम्बुवर्द्धिततनुर्जातोऽसि जीर्णे वने ।
येन प्राकृतदारुवद्धितरति त्वामेव कालागरो
धूपोद्गारिसुगन्धिमिन्धनतया चुल्लीषु पल्लीजनः ॥ ६ ॥

जिह्वा प्रतीपा मधुपेषु दानं कार्कश्यमङ्गेषु गतिश्च मन्दा ।
तवैव मातङ्ग पुरा कृतेन पुण्येन केनासि महीशमान्यः ॥ ७ ॥

मुक्ताफल त्वां द्विपकुम्भसंस्थं
पञ्चाननो मुञ्चतु मांसलोभी ।
किरन्तु गुञ्जाभरणं किराताः
किं तेन हीयेत महार्हता ते ॥ ८ ॥

जातः समुद्रादुपमानभूतः
कान्ताधरस्याप्यमृतोपमस्य ।
सौम्योऽसि वर्णात्कठिनत्वमेकं
न चेत्त्वया विद्रुम कः समानः ॥ ९ ॥

यन्मुक्तामणयोऽम्बुधेरुदरतः क्षिप्ता महावीचिभिः
पर्यन्तेषु लुठन्ति निर्मलरुचः स्पष्टाट्टहासा इव ।
तत्तस्यैव परिक्षयो जलनिधे द्वीपान्तरालम्बिनो
मुक्तानां तु परिग्रहव्यसनिनः सन्त्येव सांयात्रिकाः ॥ १० ॥

अब्धी रत्नमधो धत्तां धत्तां च शिरसा तृणम् ।
अब्धेरेव हि दोषोऽयं रत्नं रत्नं तृणं तृणम् ॥ ११ ॥



वाताधूततरङ्गताण्डवदशागण्डूषितव्योमभिः
पूरैः प्लावयितुं जगन्ति जलधे वाञ्छां वृथा मा कृथाः ।
जीवत्येव स कुम्भसम्भवमुनिः यत्पाणिपद्मोदरे
सोऽयं ते महिमा हिमाम्बुकणिकादुःस्थामवस्थां ययौ ॥ १२ ॥

मा गर्वं भज वारिधे क्षितिभृतामावासभूम्यात्मनः
सत्यं ते स पुरन्दरः खलु रिपुः पक्षाश्च रक्ष्याः स्वयम् ।
किं च त्वं च भुजङ्गसङ्गविषमः सत्यं जडात्मा तृषा-
मार्तानां न निवारयेस्तव कथं सद्भिः प्रमोद्यं यशः ॥ १३ ॥

रे रे गर्जसि किं पयोधर तिरोधाय प्रभां भास्वतः
सन्मार्गं विषमं विधाय भुवने कालुष्यमापाद्य च ।
सम्प्रत्येव समीरणव्यतिकरादागामिनीं तां दशां
जानास्येव ... ... ... ... ॥ १४ ॥

अपि तव वटो स्पर्धा बीजेन सर्षप साम्प्रतं
परिणमसि यो मुष्टिः शाकं सति स्थलसौष्ठवे ।
जठरकुहरे क्रीडन् यदेकदलोदरे
प्रलयशिशुको देवः शिश्ये पुरेति हि शुश्रुमः (?) ॥ १५ ॥

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां व्रजन्त्यशुचयः स्पर्शेन यस्यापरे ।
किं वास्मात्परमस्ति ते स्तुतिपदं त्व जीवनं देहिनां
त्वं चेन्नीचपथेन गच्छसि पयः कस्त्वां निरोद्धुं क्षमः ॥ १६ ॥

तापो नापगतस्तृषापि न गता धौता न धूली तनोः
न स्वच्छन्दमकारि कन्दलबलं का नाम केलीकथा ।
दूरोत्क्षिप्तकरेण हन्त करिणा स्पृष्टा नवा पद्मिनी
प्रारब्धो मधुपैरकारणमहो संहारकोलाहलः ॥ १७ ॥

छिन्ते ब्रह्मशिरो यदि प्रथयति प्रेतेषु सख्यं यदि ।
क्षीबः क्रीडति मातृभिर्यदि रतिं धत्ते श्मशाने यदि ।
सृष्ट्वा संहरति प्रजा यदि तथाप्याधाय भक्त्या मनस्तं
सेवे करवाणि किं त्रिजगतीशून्यां स एवेश्वरः ॥ १८ ॥

लाङ्गूलचालनमधश्चरणावपातं[1]
भूमौ निपत्य वदनोदरदर्शनं च ।

---

१. चरणौ°–$S_1$.

श्वा पिण्डदस्य कुरुते गजपुङ्गवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥ १९ ॥

यदि काको गजेन्द्रस्य विष्ठां कुर्वीत मूर्धनि ।
कुलानुरूपं तत्तस्य यो गजो गज एव सः ॥ २० ॥

जेतुं शत्रुगणान्नृपा जडधियः क्रीडन्तु दन्तावलै-
स्तज्जेतारमपारवीरचरितं मुञ्चन्तु पञ्चाननम् ।
कुम्भोद्भेदलसन्नखान्तरदरीसंसक्तमुक्तागणं
दृष्ट्वा तेन मृधेऽपि संहृतमदा मुह्यन्ति सिद्धद्विपाः ॥ २१ ॥

यद्वक्त्रं मुहुरीक्षसे न धनिनां ब्रूषे न चाटून्मृषा
नैषां गर्वगिरः शृणोषि न च तान्प्रत्याशया धावसि ।
काले बालतृणानि खादसि परं निद्रासि निद्रागमे
तन्मे ब्रूहि कुरङ्ग कुत्र भवता किं नाम तप्तं तपः ॥ २२ ॥

विरम कलमपालीचापलाद् दुःस्वभावाद्
विहर हरिण दूर्वावल्लरीभिर्वनान्ते ।
तव च ललितमङ्गं रक्षकाणां च रौक्ष्यं
द्वयमपि गणयित्वा कम्पते मानसं नः ॥ २३ ॥

याते समीपमथ लुब्धशराः पतन्ति
... ... ... ... ... ... ।
आलोक्य धीवरकरस्थगतां मृगीं त्वां
किं वा करोतु हतधीस्तरुणः कुरङ्गः ॥ २४ ॥

पुष्पासवं सुरभिगन्धि रजोऽरुणाङ्गः
पीत्वा लतासु मधुपः कमले निषण्णः ।
बद्धोऽधुना शशिकरैः करुणं विरौति
सन्तोषहीनमिह किं न भजन्त्यनर्थाः ॥ २५ ॥

आमूलात्खलु कण्टकव्यतिकरः पङ्काज्जनिश्चञ्चलैः
संसर्गो मधुपैश्च ते कमलमित्याख्या प्रसिद्धैव हि ।
त्वामेवंविधमप्युपाश्रितवती दैवेन लक्ष्मीरहो
यद्येवं न भवेद्भवेः कथमिह त्वं राजहंसास्पदम् ॥ २६ ॥

१. द्वि°–$S_1$.



आत्मस्थितिं जलधरो गगने विहाय
त्वां जीवनं हृतमगात्स्वयमेव नाशम् ।
त्वद्धारणाद्वसुमती सफलैव जाता
तत्सङ्गमात्सरसता भवताभ्युपेता ॥ २७ ॥

पातालं वसतिः परिच्छदगणाः शेषादयः पन्नगा
जामाता जगदीश्वरो मधुरिपुः पत्नी नभोनिम्नगा ।
कन्या सा कमला धनानि मणयः पुत्रौ शशाङ्कामृते
निस्सामान्यमहो महार्णव तव श्लाघ्यं कुटुम्बव्रतम् ॥ २८ ॥

येन पाषाणखण्डस्य मूल्यमल्पं वसुन्धरा ।
अनस्तमितसारस्य तेजसस्तद्विजृम्भणम् ॥ २९ ॥

चिन्तामणेस्तृणमणेश्च कृतं विधात्रा
केनोभयोरपि मणित्वमदः समानः ।
नैकोऽर्थितानि दददर्थिजनाय खिन्नो
गृह्णन् जरत्तृणलवं न तु लज्जतेऽन्यः ॥ ३० ॥§

श्रीमत्कौस्तुभ रत्नराज भवतः श्लाघ्यं गुणोल्लासिनी-
मज्ञात्वा स महाम्बुधिर्जडतया धत्तामधस्त्वामपि ।
खेदं मा कुरु दोष एव जलधेस्त्वं रोचिषां चातुरीः
बिभ्रत्क्रीडसि भूयसि प्रतिदिनं लक्ष्मीपतेर्वक्षसि ॥ ३१ ॥

आघ्रातं परिचुम्बितं च नखरैः क्षुण्णं च यच्चर्वितं
क्षिप्तं यद्वत नीरसत्त्वकुपितेनेति व्यथां मा कृथाः ।
हे सद्रत्न तवैतदेव कुशलं यद्वानरेणाग्रहा-
दन्तःसारविचारणव्यसनिना चूर्णीकृतं नाश्मना ॥ ३२ ॥

सुवर्णकार श्रवणोचितानि
वस्तूनि विक्रेतुमिहागतोऽसि ।
अद्यापि नाश्रावि किमत्र पल्ल्यां
पल्लीपतिस्तावदविद्धकर्णः ॥ ३३ ॥

स्वर्णकार सुधिये नमोऽस्तु ते
दुस्तरेषु बहुशः परीक्षितम् ।

१ पत्नीगणो निम्नगाः–$S_1$.
§ Bhallata.

यत्त्वयैतदधिरोप्यते तुलां
काञ्चनाभरणमश्मना समम् ॥ ३४ ॥

बुध्यामहे न बहुधापि विकल्पयन्तः
कैर्नामभिर्व्यपदिशाम महामतींस्तान् ।
येषामशेषभुवनाभरणस्य हेतो-
स्तत्त्वं विवेक्तुमुपलाः परमं प्रमाणम् §॥ ३५ ॥

न म्लानितान्यखिलधामवतां मुखानि
नास्तं तमो न च कृतो भुवनोपकारः ।
सूर्यात्मजोऽहमिति केन गुणेन लोकं
प्रत्यायसिष्यसि शने शपथैर्विना त्वम् ॥ ३६ ॥

भ्रातः काञ्चनलेपगोपितबहिस्ताम्राकृते साम्प्रतं
मा भैषीः कलश स्थिरीभव चिरं देवालयस्योपरि ।
ताम्रत्वं गतमेव काञ्चनमयी कीर्तिः स्थिरा तेऽधुना
नान्तस्तत्त्वविचारणाकुलधियो लोका बहिर्बुद्धयः ॥ ३७ ॥

निष्कन्दामरविन्दिनीं स्थपुटितोद्देशस्थलां पल्वले
जम्बालाविलमम्बुकर्तुमनिशं सूते वराही सुतान् ।
दंष्ट्रायां चतुरर्णवोर्मिपटलैराप्लावितायामलं
यस्या एव शिशोः स्थिता विपदि भूः सा पुत्रिणी पुत्रिणी ॥ ३८ ॥

नेपालप्रमदाकपोलफलकप्रेङ्खोलकर्णोत्पल-
च्छायास्वैरविहारनित्यरसिके कस्तूरि किं ताम्यसि ।
पापस्य प्रय……पिण्याकपण्यापण-
श्रेणिव्यापृतपामरीकररजःशूर्पार्पणाकारिणः ॥ ३९ ॥

अङ्कं मातङ्गनक्रभ्रमिरभसहयभ्रान्तनेत्रान्तलक्ष्मी-
दोर्लीलाश्लेषहर्षप्रसृमरपुलकग्रन्थिलस्कन्धपीठः ।
मध्ये हस्तं ज…प्रतिमलघुतनुः प्राप्य दुस्थामवस्थां
स्नेहे यस्यावलेपं हरिरपि परितः कैर्न वा कुम्भयोनिः ( ? ) ॥ ४० ॥

दावाग्निप्लोषदुःखं खरपवनजवं[1] क्लेशमर्कांशुतापं
मातङ्गाकर्षणादिव्यसनमपि गुरून्वज्रपातान्सहन्तः ।
शीतच्छायां फलानि त्वचमपि कुसुमं मञ्जरीपल्लवाद्यैः
मर्त्येभ्यो धारयन्ती प्रतिदिवसमहो साधुवृत्तं तरूणाम् ॥ ४१ ॥

---

१ ᶜभवंᶜ–$S_1$

§ Bhallaṭa.



अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनालस्य मा भूवन् भङ्गुरा गुणाः ॥ ४२ ॥§

सङ्कोचमेहि शतपत्र जहीहि शोभां
दोषाकरोऽयमधुना समुदेति पश्य ।
वक्रात्मनि प्रभवति क्रमशो विचिन्त्य
प्रच्छन्नता गुणवतां स्वयमेव युक्ता ॥ ४३ ॥

त्रुट्यद्गुणोऽपि गतकण्टकसङ्गतोऽपि
रन्ध्रान्वितोऽपि बहुकर्दमसम्भवोऽपि ।
भृङ्गोपजीव्यविभवोऽपि तथापि पद्मो
मित्रोदये विकसनं लभते सदैव ॥ ४४ ॥

नालस्य प्रसरो जडेष्वपि कृता वासस्य कोशे रुचि-
र्दण्डे कर्कशता मुखे च मृदुता मित्रे महज्जृम्भणम् ।
आमूलं गुणसङ्ग्रहव्यसनिता द्वेषश्च दोषागमे
यस्यैषा स्थितिरम्बुजस्य वसतिर्युक्तैव तत्र श्रियः ॥ ४५ ॥

साधूत्पातघनौघ साधु सुधियां ज्ञेयं धरायामिदं
सोऽन्यः कर्तुमलं तवैव घटते कर्मेदृशं दुष्करम् ।
सर्वस्यौपयिकानि तानि कतिचित्क्षेत्राणि तत्राशनिः
सर्वानौपयिकेषु दग्धसिकतारण्येष्वपां वृष्टयः ॥ ४६ ॥

यस्याम्बुकणिकाप्यास्ये न विशत्यर्थिनां क्वचित् ।
कष्टमम्भोनिधिः सोऽपि नदीन इति कथ्यते ॥ ४७ ॥

यातु नाशं समुद्रस्य महिमा लोकविश्रुतः ।
वाडवः क्षुत्पिपासार्तो येनैकोऽपि न तर्पितः ॥ ४८ ॥

अयं वारामेको निलय इति रत्नाकर इति
श्रितोऽस्माभिस्तृष्णातरलितमनोभिर्जलनिधिः ।
क एवं जानीते निजकरपुटीकोटरगतं
क्षणादेनं ताम्यत्तिमिनिकरमापास्यति मुनिः ॥ ४९ ॥§

रूपं हारि मनोहरा सहचरी पानाय पाद्मं मधु
क्रीडाम्भःसु सरोरुहेषु वसतिस्तेषां रजोमण्डनम् ।

---

§. Bhallaṭa.

वृत्तिश्चाभिमता बिसेन सुहृदश्चारुस्वनाः षट्पदाः
सेवादैन्यविमाननाविरहितो हंसः सुखं जीवति ॥ ५० ॥

अस्यां सखे बधिरलोलनिवासभूमौ
किं तेन कोकिल मनोहरकूजितेन ।
एते हि दैववशतस्तदभिन्नरूपं
त्वां काकमेव कलयन्ति[1] कलानभिज्ञाः ॥ ५१ ॥

भ्रातर्ध्वाङ्क्ष रूक्षनाद शृणु ते वक्ष्यामि शिक्षावचो
मा गास्त्वङ्कलकण्ठकैः सह नृपोद्यानं सदानन्दनम् ।
दैवादश्रवणेन नूतननृपो यदि तदा त्वद्देहकं सेवते
किं वा सुश्रवणस्त्वसौ यदि भवेदाः का गतिः काक ते ॥ ५२ ॥

तावत्कोकिल वैभवं कुरु सखे माकन्दसान्द्रे वने
यावत्काकविपाककण्ठविगलद्रूक्षध्वनिर्जृम्भते ।
आस्ते भिक्षणमेव वर्णविभवाद्विस्तारिगन्धाग्रहे
पङ्कोऽपि स्तनसङ्गतो मृगदृशां कस्तूरिकाधीकरः ॥ ५३ ॥

निरानन्दः कौन्दे मधुनि विधुरो बालबकुले
न साले सालम्बो लवमपि लवङ्गे न रमते ।
प्रियङ्गौ नासङ्गं रचयति न चूतेऽपि रमते
स्मरंल्लक्ष्मीलीलाकमलमधुपानं मधुकरः ॥ ५४ ॥

केनाघ्रातमुदारमस्य कुसुमं कैश्चुम्बितं केतकी
पत्रं पुष्परजोऽस्य केन रजसा चोद्धूलितं केन च ।
भो भो पुष्पमधुव्रत व्रज जवादन्यांस्तरून्पुष्पिता-
नुत्ताले तु वृथैव पिप्पलतरौ किं किंचिदास्वाद्यते ॥ ५५ ॥

इन्दुः प्रयास्यति विनङ्क्ष्यति तारकश्रीः
स्थास्यन्ति लीढतिमिरा न मणिप्रदीपाः ।
अन्धं समग्रमपि कीटमणे भविष्य-
त्युन्मेषमेष्यति भवानपि दूरमेतत् ॥ ५६ ॥

१. कथयन्ति–$S_1$.



सत्त्वान्तःस्फुरिताय वा परगुणाध्यारोपतुच्छाय वा
तस्मै कातरमोहनाय महसो लेशाय मा स्वस्ति भूत् ।
यच्छायाच्छुरितारुणेन लसता खद्योतनाम्नामुना
कीटेनाहितयापि जङ्गममणिभ्रान्त्या विडम्ब्यामहे ॥ ५७ ॥

यथा पल्लवपुष्पास्ते यथा मूलफलर्धयः ।
तथा फलर्धिस्वारोहा हा मातः क्वागमन्द्रुमाः ॥ ५८ ॥§

अभागधेयेन पुरा कृतेन
वनोदरे चम्पक लम्पटोऽसि ।
तृणामिवाज्ञातगुणागुणानां
त्वमेधसे केवलमेक एव ॥ ५९ ॥

सुन्दरोऽयमिति मन्दिराङ्गणे
स्थापितोऽप्यकृतसेचनाक्रियः ।
आलवालकृतकालयापना-
च्छोषणं व्रजति चूतपोतकः ॥ ६० ॥

लोकानन्दन चन्दनद्रुम सखे नास्मिन्वने स्थीयतां
दुर्वंशैः परुषैरसारहृदयैराक्रान्तमेतद्वनम् ।
तेऽप्यन्योन्यनिघर्षजातदहनज्वालावलीव्याकुलाः
न स्वान्येव कुलानि केवलममी सर्वं दहेयुर्वनम् ॥ ६१ ॥

छायाभिः प्रथमं ततस्तु कुसुमैः पश्चात्फलैः स्वादुभिः
प्रीणात्येष तरुर्महानिति पथि श्रान्तैः समाश्रीयते ।
को जानाति हि तत्र कोटरपुटे प्रत्यग्रहालाहल-
ज्वालाजालकरालपाटलफणः क्रूरः फणी वर्तते ॥ ६२ ॥

किं ते नम्रतया किमुन्नततया किं ते घनच्छायया
किं ते पल्लवशोभया किमनयाशोक प्रसूनश्रिया ।
यत्त्वन्मूलनिषण्णखिन्नपथिकः श्रान्तः स्तुवन्नन्वहं
न स्वादूनि फलानि खादति बहून्याकण्ठमुत्कण्ठितः ॥ ६३ ॥

सन्मूलः प्रथितोच्चतिर्घनतरच्छायः स्थितः सत्पथे
सेव्यः सद्भिरितीदमाकलयता तालोऽध्वगेन श्रितः ।
पुंसः शक्तिरियत्यसौ स तु पतेद्दैव वाचोऽथवा
... ... ... ... ... ॥ ६४ ॥

§. Bhallata.

जायन्ते कति नाम विन्ध्यकटके वन्ध्याः परे वेणवः
किं तेषामभिजन्मना स तु परं जागर्ति लोकोत्तरः ।
यः सूते शवरेन्द्रचन्द्रवदनातुङ्गस्तनारोहण-
श्लाघादुर्ललितद्युतीन्निजपरिस्फोटेन मुक्तामणीन् ॥ ६५ ॥

करान्तिरोधाय तरून्निपीड्य
शिला अवस्कन्द्य महीयसोऽपि ।
उज्जृम्भितः कालवशात्तदन्य-
स्तेषामधस्तात्पुनरेव जातः ॥ ६६ ॥

सर्वत्र शुचयो हंसाः पद्मेभ्यो बहिरासते ।
अन्तर्विशन्ति मधुपाः श्रीमतामीदृशी गतिः ॥ ६७ ॥

स्वयममृतनिधानं नायकोऽप्योषधीनां
शतभिषगनुयातश्शम्भुचूडावतंसः ।
विरहयति न चैनं राजयक्ष्मा शशाङ्कं
हतविधिपरिपाकः केन वा लङ्घनीयः ॥ ६८ ॥

छित्त्वा पाशमपास्य रूपरचनां भङ्क्त्वा बलाद्वागुरां
पर्यन्ताग्निशिखाकलापजटिलान्निर्यात्यदूरं वनात् ।
व्याधानां शरगोचरादतिजवेनोत्प्लुत्य धावन्मृगः
कूपान्तः पतितः करोति विधुरे किं वा विधौ पौरुषम् ॥ ६९ ॥

क्षुत्क्षामेन न कथं कथञ्चिदलसं गात्रं कृशं बिभ्रता
भ्रान्तं येन गृहे गृहे गृहवतामुच्छिष्टपिण्डार्थिना ।
अस्थ्नः खण्डमवाप्य दैवपतितं शून्यां त्रिलोकीमिमां
मन्वानो धिगहो स एव सरमापुत्रो नृसिंहायते ॥ ७० ॥

पूर्णेषु सत्सु विमलेषु जलाशयेषु
निर्दैन्यमेव भवता गमितान्यहानि ।
... ... ... ... ...
मा गास्त्रिलोकविदितोऽसि दृढव्रतोऽसि ॥ ७१ ॥

अम्भोजिनीवननिवासविलासमेव
हंसस्य हन्तु नितरां कुपितो विधाता ।
न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां
वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः ॥ ७२ ॥

१. क्षे-$S_1$.



वातान्दोलितपङ्कजच्युतरजः पिङ्गाङ्गरागोज्ज्वलो
यः शृण्वन्कलकूजितं मधुलिहां सञ्जातहर्षोत्सवः ।
कान्ताचञ्चुपुटापवर्जितबिसग्रासग्रहेऽप्यक्षमः
सोऽयं सम्प्रति हंसको मरुगतः कष्टं तृणं याचते ॥ ७३ ॥

केलिं कुरुष्व परिभुङ्क्ष्व सरोरुहाणि
गाहस्व शैलतटनिर्झरिणीपयांसि ।
भावानुषक्तकरिणीकरलालिताङ्ग
मातङ्ग मुञ्च मृगराज रणाभिलाषम् ॥ ७४ ॥

रेखापथं किसलयानि च सल्लकीनां
विन्ध्योपकण्ठविपिनं स्वकुलं च भित्वा ।
किं ताम्यसि द्विप गतो विवशां तरुण्याः
स्नेहो हि कारणमनर्थपरम्परायाः ॥ ७५ ॥

नदीवप्रान्भित्वा किसलयवदुत्पाट्य च तरून्
मदोन्मत्तान् जित्वा करचरणदन्तैः प्रतिगजान् ।
जरां प्राप्यानार्यां तरुणजनविद्वेषजननीं
स एवायं नागः सहति कलभेभ्यः परिभवम् ॥ ७६ ॥

क्वाकारो गिरिसन्निभः क्व च गतिर्वेगोऽपि लीला क्व सा
हेलाकुञ्चलितेक्षणाः क्व च दृशः तद्वा क्व ते बृंहितम् ।
वप्राघातरसः क्व वा तव करिन्नष्टं यदेवंविधं
त्वामारुह्य शिशुः पदा परवशं सञ्चारयत्याज्ञया ॥ ७७ ॥

गते तस्मिन् भानौ त्रिभुवनसमुन्मेषविरह-
व्यथां चन्द्रो नेष्यत्यनुचितमितो नास्ति किमपि ।
इदं चेतस्तापं जनयतितरामत्र यदमी
प्रदीपाः सञ्जातास्तिमिरहतिबद्धोद्धुरशिखाः ॥ ७८ ॥§

आस्वादितद्विरदशोणितशोणशोभां
सन्ध्यारुणामिव कलां शशलाञ्छनस्य ।
जृम्भाविदारितमुखस्य मुखात्स्फुरन्तीं
का हर्तुमिच्छति हरेः परिभूय दंष्ट्राम् ॥ ७९ ॥ †

§. Bhallaṭa. †. Mudrārākṣasa.

धत्तां भास्मनमङ्गरागमजिनं वस्तां च नागोद्धृतं
कापालीं स्रजमाबिभर्तु कटकं चाहेयमायुञ्जतु ।
भूयश्चापि शिवेतराणि भजतां देवस्तथापि स्वयं
सत्स्वन्येष्वपि दैवतेषु शिव इत्येवं समाम्नायते ॥ ८० ॥

तिक्तैर्निम्बतरोः फलैर्बलिभुजा कष्टेन पुष्टस्य ते
कण्ठे काचन काकली कथमियं जाता जगन्मोहिनी ।
बाल्ये त्वां कलकण्ठवत्स पितरौ माकन्दमुग्धाङ्कुरैः
प्रेम्णा संभ्रियतां यदि स्वरगुणोत्कर्षः कियांस्ते भवेत् ॥ ८१ ॥

शाखापुष्पफलादिमत्त्वसमतामानेद्धया स्पर्धया
किं मन्दः पिचुमन्द एति गणनां माकन्द साकं त्वया ।
वैषम्ये युवयोः नवाङ्कुरफलास्वादप्रमोदोद्धतौ
कण्ठौ कोकिलकाकयोः कलकटुक्काणौ प्रमाणं ननु ॥ ८२ ॥

शृण्वन्कर्णमहोत्सवानपि मुहुः पुंस्कोकिलस्य स्वरान्
ध्वान्तः कांक्षति यं न कर्तुमनिशं मानेन मौनं व्रतम् ।
तन्नूनं न निरूपयत्यरसतां स्वस्य स्वरस्य स्वयं
यद्वासौ गुणदोषयोर्गणयते लोकं विवेकान्वितम् ॥ ८३ ॥

या पीनस्तनकुम्भयुग्मवहनक्लान्तापि कुम्भाहृतैः
त्वामम्भोभिरपि न्यधात् सुतमिव स्नेहेन गेहाङ्गणे ।
तां मुग्धां प्रियविप्रयोगसमये भूयोऽपि मायासय
स्तोकव्यञ्चितमञ्जरीशबलितैर्माकन्द मा कन्दलैः ॥ ८४ ॥

कुप्यत्पर्वतसार्वभौमतनयासर्वाङ्घ्रिपद्मार्पणा–
लब्धोद्वेलमहिम्नि मूर्ध्नि वहता सम्भावितः शम्भुना ।
मा त्वं मुग्धविधो वृथा कृशतया खिद्यस्व हृद्यस्व य–
न्नेदानीं तव राहुणा परिभवः सङ्गः कलंकेन वा ॥ ८५ ॥

*मृगमद मा कुरु गर्वं परिमलमात्रेण राजजुष्टोऽसि ।
परिमलता निर्मलता शीतलता सौकुमार्यमन्यत्र ॥ ८६ ॥

स्वच्छं दर्पणमाश्रिता तनुभृतां छाया सदृश्यस्तु तै–
स्तच्चेष्टां विविधां त्वसत्यकरणैः कर्मेन्द्रियैः केवलम् ।
तद्वद्वेत्ति किमु ब्रवीति किमु तद्वृत्तानि सत्यानि किं
मायाव्याप्तृतिमेव केवलमसौ गृह्णाति मूढो जनः ॥ ८७ ॥

* This and the following from Saṅgraha only.



पङ्के जन्म जले वासो दण्डकण्टककर्कशाः ।
इतीव मीलितं पद्मं रुदत्यलिरवच्छलात् ॥ ८८ ॥

अग्रे व्याधः कृशशरकरः पार्श्वतो जालमाला
पृष्ठे वह्निर्दहति पवनात्सन्निधौ सारमेयः ।
एणी गर्भादलसगमना बालकाः क्रोडलीना
इत्यापन्नो गणयति मृगः किं करोमि क्व यामि ॥ ८९ ॥

तदानीं दृश्यन्ते शतमखमुखा ये दिविषदः
विभज्यन्ते क्षीराम्बु[1]धिभवरमाद्याः खलु यदा ।
तदानीमाक्रान्ते गरलशिखिना लोकनिवहे
विनैकं विश्वेशं शिवमिह न केऽपि क्वचिदपि ॥ ९० ॥

जानुभ्यां चरतु स्खलन्मृदुलया गत्या सहासं पदा–
न्यादध्यात्तु शिखण्डकं वहतु च श्रोण्या वहेत्किङ्किणीम् ।
शिक्यस्थं नवनीतमप्यपहरेन्मात्रा च संतर्जितो
बालः कृष्णवदावृताद्वदनकाल्लोकान्कथं दर्शयेत् ॥ ९१ ॥

न म्लै[2]यितान्यखिलधामवतां मुखानि
नास्तं तमो न च कृता भुवनोपकाराः ।
सूर्यात्मजोऽयमिति केन गुणेन लोकं
प्रत्याययिष्यति शने शपथैर्विना त्वाम् ॥ ९२ ॥

वितर वारिद वारि तृषातुरे चिरपिपासितचातकपोतके ।
प्रचलिते मरुति क्षणमन्यथा क्व च भवान् क्व च पयः
क्व च चातकः ॥ ९३ ॥

फणिनो बहवः सन्ति भेकभक्षणतत्पराः ।
एक एव हि शेषोऽयं धरणीधारणक्षमः ॥ ९४ ॥

## ॥ सङ्कीर्णपद्धतिः ॥ १३७ ॥

नास्ति विद्यासमं मित्रं नास्त्यविद्यासमो रिपुः ।
न चापत्यसमः स्नेहो न च दैवात्परं बलम् ॥ १ ॥[a]

a. Vallabhadeva.
१. °धि तव°–$S_1$. २. म्रायिता–$S_1$.

असन्तुष्टो द्विजो नष्टः सन्तुष्टः क्षत्रियस्तथा ।
सलज्जा गणिका नष्टा निर्लज्जा च कुलाङ्गना ॥ २ ॥

अत्यल्पमपि साधूनां शिलालेखेव विष्ठति ।
जललेखेव नीचानां यत्कृतं तद् विनश्यति ॥ ३ ॥

अनभ्यासे विषं शास्त्रमजीर्णे भोजनम् विषम् ।
दरिद्रस्य विषं गोष्ठी वृद्धस्य तरुणी विषम् ॥ ४ ॥[b]

नालसाः प्राप्नुवन्त्यर्थान्न शठा न च मायिनः ।
न च लोकरवाद्भीता न च शश्वत्प्रतीक्षिणः ॥ ५ ॥

उत्साहो रिपुवन्मित्रमालस्यं मित्रवद्रिपुः ।
अमृतं विषवद्विद्याऽमृतवद्विषमङ्गना ॥ ६ ॥[c]

जीवन्मृतो दरिद्राख्यस्त्यज्यते पतितो यथा ।
श्रीमानाश्रीयते सर्वैः पुष्पवृक्ष इवालिभिः ॥ ७ ॥

एकः स्वादु न भुञ्जीत नैकः कार्यं विचिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ८ ॥

गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति भूसुराः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ९ ॥[d]

राजपुत्र चिरं जीव मा जीव ऋषिपुत्रक ।
जीव वा मर वा साधो व्याध मा जीव मा मर ॥ १० ॥

वेदशास्त्रप्रसङ्गेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥ ११ ॥

माता यदि विषं दद्याद्विक्रीणीते पिता सुतम् ।
राजा हरति सर्वस्वं का तत्र परिदेवना ॥ १२ ॥

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
कृतविद्यश्च शूरश्च यश्च जानाति सेवितुम् ॥ १३ ॥

कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम् ।
को विदेशः सुविद्यानां कः परः प्रियवादिनाम् ॥ १४ ॥[e]

b. Daṇḍanīti.  c. Pratāprudra.
d. Mahābhārata.  e. SBhg.



अविद्यः पुरुषः शोच्यः शोच्यं मिथुनमप्रजम् ।
निराहाराः प्रजाः शोच्याः शोच्यं राष्ट्रमराजकम् ॥ १५ ॥

अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ।
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ॥ १६ ॥

अलङ्करोति हि जरा नृपविप्रचिकित्सकान् ।
विडम्बयति वेश्या स्त्री मल्लचारणनर्तकान् ॥ १७ ॥[f]

नागुः सम्पन्नमश्नाति नाकुमारः प्रमोदते ।
नश्रीर्न कृषमाणस्य नाभ्रातुर्वर्धते बलम् ॥ १८ ॥

[1]स्वपन्निव गजो हन्ति लिहन्निव भुजङ्गमः ।
हसन्निव नृपो हन्ति मानयन्निव दुर्जनः ॥ १९ ॥

देहीति वचनं कष्टं नास्तीति वचनं तथा ।
देहि नास्तीति वचनं मा भूज्जन्मनि जन्मनि ॥ २० ॥

भुक्तोपविशतस्तुङ्गं बलं भवति तिष्ठतः ।
आयुश्चङ्क्रमतो मृत्युः स्वपतो धावतोऽसुखम् ॥ २१ ॥

सा भार्या या प्रियं ब्रूते स पुत्रो यत्र निर्वृतिः ।
तन्मित्रं यत्र विश्वासः स देशो यत्र जीव्यते ॥ २२ ॥[g]

अध्वा जरा मनुष्याणामनध्वा वाजिनां जरा ।
अमैथुनं जरा स्त्रीणां वस्त्राणामातपो जरा ॥ २३ ॥

विद्या प्रवसतो मित्रं भार्या मित्रं गृहे सतः ।
आतुरस्य भिषङ्मित्रं दानं मित्रं मरिष्यतः ॥ २४ ॥[h]

मृतो दरिद्रः पुरुषो मृतं राष्ट्रमराजकम् ।
मृतमश्रोत्रियं दानं मृतो यज्ञस्त्वदक्षिणः ॥ २५ ॥

पक्षिणां बलमाकाशं मत्स्यानामुदकं बलम् ।
दुर्बलस्य बलं राजा बालस्य रुदितं बलम् ॥ २६ ॥

शैले शैले न माणिक्यं मौक्तिकं न गजे गजे ।
साधवो न हि सर्वत्र चन्दनं न वने वने ॥ २७ ॥[i]

f. SBhg.  g. SBhg.  h. SBhg. with variants  i. SBhg.
१. स्पृशन्निव–$S_1$.

विनयेन विना का श्रीः का निशा शशिना विना ।
रहिता सत्कवित्वेन कीदृशी वा विदग्धता ॥ २८ ॥

पूरितं पाणिमुत्तानं जितः कुण्डलितं धनुः ।
पुनः करोति चेदग्रे धिग् दानं धिक् च पौरुषम् ॥ २९ ॥

अपात्रे रमते नारी गिरौ वर्षति वासवः ।
लुब्धमाश्रयते वित्तं प्रज्ञा प्रायेण निर्धनम् ॥ ३० ॥

मक्षिका व्रणमिच्छन्ति धनमिच्छन्ति पार्थिवाः ।
नीचाः कलहमिच्छन्ति सन्धिमिच्छन्ति साधवः ॥ ३१ ॥

स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः ।
स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ ३२ ॥

गर्जति शरदि न वर्षति वर्षति वर्षासु निःस्वनो मेघः ।
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥ ३३ ॥

अनुकुरुतः खलसुजनावग्रिमपाश्चात्यभागयोः सूच्याः ।
विदधाति रन्ध्रमेको गुणवानन्यस्तु पिदधाति ॥ ३४ ॥[j]

जलधिजलान्ता नद्यः स्त्रीभेदान्तानि बन्धुहृदयानि ।
पिशुनजनान्तं गूढं दुष्पुत्रास्तानि च कुलानि ॥ ३५ ॥

दीनं पुत्रं ब्राह्मणी याचितारं
गौर्वोढारं शीघ्रगन्तारमश्वः ।
दासं शूद्री कर्मकारं तु वेश्या
शूरं सूते क्षत्रिया राजपुत्री ॥ ३६ ॥

तृणोल्कया ज्ञायते जातरूपं
युगेन भद्रो व्यवहारेष्वसाधुः ।
शूरो भवेष्वर्थकृच्छ्रेषु धीरः
कृच्छ्रेष्वापत्सम्पदश्चारयश्च ॥ ३७ ॥

राजाश्रयस्तस्करताश्वपण्य-
माथर्वणं चापि समुद्रयानम् ।
एतानि सिध्यन्ति महाफलानि
विपर्यये प्राणहराणि पञ्च ॥ ३८ ॥

j. Sundara Pāṇḍya. ( SBhg. )
१ प्रेतं–M.



स्तब्धस्य नश्यति यशो विषमस्य मित्रं
नष्टक्रियस्य कुलमर्थपरस्य धर्मः ।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥ ३९ ॥

दुर्मन्त्रान्नृपतिर्विनश्यति यतिः सङ्गात्सुतो लालनाद्-
विप्रोऽनध्ययनात्कुलं कुतनयाच्छीलं खलोपासनात् ।
ह्रीर्मद्यादनवेक्षणादपि कृषिः स्नेहः प्रवासाश्रयात्
मैत्री चाप्रणयात्समृद्धिरनयात्त्यागात्प्रमादाद्धनम् ॥ ४० ॥[k]

क्षते प्रहारा निपतन्त्यभीक्ष्णं
धनक्षये वर्धति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति
छिद्रेष्वनर्था बहुलीभवन्ति ॥ ४१ ॥

शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।
प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गणगतः खलो मनसि सप्त शल्यानि मे ॥ ४२ ॥[m]

दातारो यदि कल्पशाखिभिरलं यद्यर्थिनः किं तृणैः
सन्तश्चेदमृतं वृथा यदि खलास्तत्कालकूटेन किम् ।
किं कर्पूरशलाकया यदि दृशः पन्थानमेति प्रिया
संसारेऽपि सतीन्द्रजालमपरं यद्यस्ति तेनापि किम् ॥ ४३ ॥[n]

पङ्गो वन्द्यस्त्वमसि न गृहं यासि योऽर्थी परेषां
धन्योऽन्ध त्वं धनमदवतां नेक्षसे यन्मुखानि ।
श्लाघ्यो मूक त्वमपि कृपणं स्तौषि नार्थाशया यः
स्तोतव्यस्त्वं बधिर न गिरं यः खलानां शृणोषि ॥ ४४ ॥[o]

किमासेव्यं पुंसां सविधमनवद्यं द्युसरितः
किमेकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधि विमुक्तौ प्रभवति ॥ ४५ ॥[p]

k. Bhartṛhari. l. Pañcatantra. (SBhg.) m. Bhartṛhari.
n. Kāvyaprakāśa. o. Bhoja. p, Ruyyaka.

क्षान्तिश्चेत्कवचेन किं किमरिभिः क्रोधोऽस्ति चेद्देहिनां
ज्ञातिश्चेदनलेन किं यदि सुहृद्दिव्यौषधैः किं फलम् ।
किं सर्पैर्यदि दुर्जनाः किमु धनैर्विद्यानवद्या यदि
व्रीडा चेत्किमु भूषणेन कविता यद्यस्ति राज्येन किम् ॥ ४६ ॥[q]

न क्रोधिनोऽर्थो न शठस्य मित्रं
क्रूरस्य न स्त्री सुखिनो न विद्या ।
न कामिनो ह्रीरलसस्य सौख्यं
सर्वं तु न स्यादनवस्थितस्य ॥ ४७ ॥

स स्निग्धो व्यसनान्निवारयति यः सत्कर्म यन्निर्मलं
सा स्त्री यानुविधायिनी स च पुमान्यः सद्भिरेवार्थ्यते ।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया नोह्यते
तन्मित्रं यदयन्त्रणं स पुरुषो यः खिद्यते नेन्द्रियैः ॥ ४८ ॥[r]

आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम् ।
सन्तोषो भीरुत्वं षड्व्याघाता महत्त्वस्य ॥ ४९ ॥

आरोग्यं विद्वत्ता सज्जनमैत्री महाकुले जन्म ।
स्वाधीनता च पुंसां महदैश्वर्यं विनाप्यर्थैः ॥ ५० ॥

वितरणविक्रमविद्यासन्ततिशारीरसत्कलत्राणि ।
पुष्णन्ति जगति पुंसां पूर्णतया एव पुण्यपरिपाकान् ॥ ५१ ॥

वेदशास्त्रप्रसङ्गेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन च ॥ ५२ ॥

किमुच्छगफळेहिं किं वा कुसुमेहिं चन्दनद्दुमस्स ।
सुहसस किं गुणेहिं भूसाये किं सुसिक्खस्स ॥ ५३ ॥

का विसमा देव्वगयी किं लद्धव्व जणो गुणग्गाही ।
किं सोक्खं सुकळत्तं किं दुक्खं जो खळो लोओ ॥ ५४ ॥[s]

सो अत्थो जो हत्थे तं मित्तं जं णिरन्तरं वसणे ।
तं रूअं जत्थ गुणा तं विण्णाणं जहिं धम्मो ॥ ५५ ॥

इति पूर्वापरसमुद्राधीश्वरारिरायविभाळ वीरश्रीकम्पराजमहाप्रधानि-भरद्वाजवंशमौक्तिक-मायणरत्नाकरसुधाकर-माधवकल्पतरुसहोदर-सायणार्यविरचिते सुभाषितसुधानिधौ अर्थपर्व सम्पूर्णम् ॥

q. Bhartṛhari. r. Bhoja. s. Saptaśatī.

# ॥ कामपर्व ॥

लक्ष्मीसरस्वतीकीर्तिविलासविहृतिस्थलम् ।
आचन्द्रतारकं जीयान्मन्त्री मायणसायणः ॥ १ ॥

मनुमान्धातृकल्पोऽयं मायणामात्यसम्भवः ।
जीयादव्याहतैश्वर्यः सायणः शरदः शतम् ॥ २ ॥

पुरीवेश्याप्रशंसा तन्निन्दा पयोधिगिरयः सरित् ।
मधुमन्दानिलग्रीष्मप्रपाप्रावृट्प्रशंसनम् ॥ ३ ॥

शरद्धेमन्तशिशिराः कामः सामान्यवर्णनम् ।
पादादियौवनारम्भप्रशंसोद्यानवर्णनम् ॥ ४ ॥

पुष्पापचयमध्याह्नसरित्सलिलखेलनम् ।
अलङ्कारश्चास्तमयः सन्ध्याध्वान्ताभिसारिकाः ॥ ५ ॥

चन्द्रोदयः कलङ्कश्च दूती यानश्च तद्वचः ।
मानं च मानिनो वाक्यं तत्प्रसादमधूत्सवाः ॥ ६ ॥

रतिचातुरतारम्भरतिर्वीरायितान्यपि ।
कलहानुनयौ रत्या विरहिण्या अवस्थितिः ॥ ७ ॥

तदालापसखीप्रश्नतद्वाक्यपथिकभाषणम् ।
चन्द्रस्यास्तमयो रत्या विरतिः काल्यवर्णनम् ॥ ८ ॥

सूर्योदयप्रशंसा च शृङ्गाररससङ्करः ।
कामपर्वणि कथ्यन्ते जातिहास्ये अपि क्रमात् ॥ ९ ॥

## ॥ पुरप्रशंसापद्धतिः ॥ १ ॥

भुजङ्गभङ्गिसुभगा पुरी विजयशालिनी ।
कौशाम्बी शाम्भवीव श्रीरस्ति स्वस्तिमती पुरी ॥ १ ॥

यत्र नेत्रे मृगाक्षीणामनङ्गः साङ्गतां ययौ ।
धन्या धनदसम्पत्तिविपत्तिकरिणी पुरी ॥ २ ॥

यस्योपकण्ठे तटिनी हारयष्टिरिवाबभौ ।
तीरस्थशेषपर्यङ्कलसदच्युतनायका ॥ ३ ॥

नीलरत्नमहासौधरश्मिवल्लीवितानकैः ।
यत्र रात्रिषु कुर्वन्ति तारकाः कुसुमभ्रमम् ॥ ४ ॥

यत्कान्तामुखसौन्दर्यं स्मरतीन्दुर्यदा यदा ।
घनावकुण्ठं कुरुते लज्जया सङ्कुचद्वपुः ॥ ५ ॥

यस्यामुच्छ्रायसुभगः प्राकारः परिघान्वितः ।
चक्रवालगिरिः साध्वि...वेत इव वीक्ष्यते ॥ ६ ॥

इन्दुभास्करयोर्यत्र नभः सञ्चारखिन्नयोः ।
पताकाः पवनाधूताः भजन्ते तालवृन्तताम् ॥ ७ ॥

अयोध्यापुरनारीणां मुखसौन्दर्यलिप्सया ।
सरोजानि सरोमध्ये चरन्तीव चिरं तपः ॥ ८ ॥

यत्राष्टमीचन्द्रमुपेयिवांसमालम्ब्य सौधेष्वसमग्रकान्तिम् ।
केशाहृतैः केतकगर्भपत्त्रैरापूरयन्त्यर्धमरालकेभ्यः ॥ ९ ॥

या मञ्जुना मारुतकम्पितानां
नादेन सौधध्वजकिङ्किणीनां ।
विनोदसल्लापमिव प्रयुङ्क्ते
वयस्यया वासरराजधान्या ॥ १० ॥

कस्तूरिकादिक्रयविक्रयाङ्गां
यदृच्छया यद्विपणिं गतानाम् ।
सौरभ्यमङ्गेषु समग्रलग्नम्
न हीयते पञ्चषमप्यहानि ॥ ११ ॥

अन्तःप्रतिच्छन्दवती स्वमूर्तिं
पद्मेषु पर्याप्तमधुद्रवेषु ।
आलोक्य यस्यां सरसीविहारे
पद्मासनेति प्रणमन्ति मुग्धाः ॥ १२ ॥

कौशाम्बीमथ सौधसङ्गतरुणीनेत्रांशुनीलोत्पल–
स्रग्दामाभरणां विवेश सुभगः कान्तासहायो नृपः ।
आकर्णाञ्चितकामकार्मुकलताकेङ्कारतारैर्मुहुः
प्रत्यग्रोत्सवलोलपौरललनाकाञ्चीरवैः पूरिताम् ॥ १३ ॥



## ॥ वेश्याप्रशंसापद्धतिः ॥ २ ॥

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः ।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ १ ॥[a]

पूजिता वा सदा राज्ञा गुणवद्भिश्च संस्तुता ।
प्रार्थनीयाभिगम्या च लक्ष्यभूता च जायते ॥ २ ॥[b]

कलानां ग्रहणादेव सौभाग्यमुपजायते ।
देशकालावपेक्ष्यासां प्रयोगः सम्भवेन्न वा ॥ ३ ॥

कलाभिरु[1]च्छ्रिता वेश्या रूपशीलगुणान्विता ।
लभते गणिकाशब्दं [2]स्थानं च जनसंसदि ॥ ४ ॥

वत्सः प्रस्नवने मेध्यः श्वा मृगग्रहणे शुचिः ।
[3]शकुनिः फलपाकेषु स्त्रीमुखं [4]रतिसङ्गमे ॥ ५ ॥[c]

धनेनाल्पोपचारेण हरन्ति द्रविणं बहु ।
विदग्धपण्यललनाः कणोदकमिवाम्भसा ॥ ६ ॥

पुत्रीयन्त्यावयं (?) यासां सम्भोगेन धनार्जनम् ।
करं शिरो वा विक्रीय धनं मुग्धेन लभ्यते ॥ ७ ॥

इदं हि यौवनं बाले तरङ्गगणगत्वरम् ।
अस्मिन् प्रभाते वृद्धानां को ददाति कपर्दिकाम् ॥ ८ ॥

कामुके नूतनासङ्गगाढालिङ्गनकातरे ।
गणिका गेहगणनां करोति ध्यानमास्थिता ॥ ९ ॥

## ॥ वेश्यानिन्दापद्धतिः ॥ ३ ॥

अभ्यासरहिता विद्या निरुद्योगा नृपश्रियः ।
वेशयोषाश्च रागिण्यो हास्यायतनमङ्गनाः ॥ १ ॥

स्मितं नृत्तं प्ररुदितं रागो रूढिरुदारता ।
स्वप्नदृष्टमिवाशेषमसत्यं वारयोषितः ॥ २ ॥

---

a. Rājaśekhara. b. Vātsyāyana. c. Mānasollāsa.

१ °ज्झि°–$S_2$; °क्षि°– $S_1$. २ रजतं– $S_1$.

३ शकुन्तः– $S_1$. ४ प°– $S_1$.

अप्यन्विष्टा न लभ्यन्ते संसक्ता न त्यजन्ति च ।
वासना इव संसारे मोहनैकपराः श्रियः ॥ ३ ॥

निष्कामाः कामचारिण्यो भोगिन्यो न कुलोद्गताः ।
नित्यापहारहारिण्यो जृम्भन्ते वारयोषितः ॥ ४ ॥

प्रहसन्ति विषादिन्यो हृष्टाः शोचन्ति लीलया ।
रागिण्य इव निघ्नन्ति कश्चित्तं वेत्ति योषिताम् ॥ ५ ॥

दृष्टिच्छटेव तीक्ष्णान्ता कुटिला भ्रूलतेव च ।
स्तनस्थलीव कठिना वेश्या सर्वस्वहारिणी ॥ ६ ॥

येन येन यदा युक्ता तदा तद्रागरूषिता ।
वियुक्तेष्वरुचिं धत्ते वेश्या किं स्फोटिका शिला ॥ ७ ॥

नासां कश्चिदगम्योऽस्ति नासां वयसि संस्थितिः ।
कुरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥ ८ ॥

साधारणी स्त्री गणिका सा वित्तं परमिच्छति ।
निर्गुणेऽपि न विद्वेषो न रागोऽस्या गुणिन्यपि ॥ ९ ॥

संसारादपि साश्चर्यं स्वप्नादप्युन्नतभ्रमम् ।
श्वपुच्छादपि निःशेषकुटिलं स्त्रीविचेष्टितम् ॥ १० ॥

संमोहयन्ति मदयन्ति विडम्बयन्ति
निर्भर्त्सयन्ति रमयन्ति विषादयन्ति ।
एताः प्रविश्य सदयं हृदयं नराणां
किं नाम वामनयना न समाचरन्ति ॥ ११ ॥[d]

## ॥ समुद्रपद्धतिः ॥ ४ ॥

अनङ्गंकरिणी भूमेरियं हि मणिमेखला ।
अयमेव पुरां हन्तुर्हालाहलमहानसः ॥ १ ॥

अस्यैव[1] शुक्तिशकलं हरकोटीरचन्द्रमाः ।
विष्णोः प्रियतमा लक्ष्मीरमुष्य जलमानुषी ॥ २ ॥

१ असौ च–$S_2$.
d. Sbhg.



ब्रह्माण्डमण्डलस्फारस्फाटिकस्तम्भविभ्रमैः ।
उत्तुङ्गविपुलाभोगैस्तरङ्गैर्लङ्घिताम्बरम् ॥ ३ ॥

आसेव्यमानमभितः पृथुभिर्मेघसञ्चयैः ।
मैनाकरक्षासञ्जातप्रत्ययैरिव भूधरैः ॥ ४ ॥

संसारमिव निष्पारमायासमिव दुःसहम् ।
मायाजालमिवानन्तं मूर्तं खलमिवोद्धतम् ॥ ५ ॥

तासामवस्थां प्रतिपद्यमानं
स्थितं दश व्याप्य दिशो महिम्ना ।
विष्णोरिवास्यानवधारणीय-
मीदृक्तया रूपमियत्तया च ॥ ६ ॥

श्यामायमानः क्वचिदिन्द्रनीलैः
क्वचित्प्रवालैररुणायमानः ।
रत्नाकरः स्मारयति स्म शम्भोः
शैलेन्द्रकन्याशबलं शरीरम् ॥ ७ ॥

यथा दूरापातित्रिदशयुवतीनेत्रसुलभा-
मपां हर्ता हारावलिवलयलक्ष्मीं वितनुते ।
यथायं माणिक्यस्फटिककनकग्रावशिखरै-
रशून्यात्मा सेतुर्विलसति महानायक इव ॥ ८ ॥[e]

पारावारपयस्तरङ्गपटलीपर्यन्तमुक्ताफल-
ज्योत्स्नाफेनिलसैकतश्रियमियं पुष्णाति वेलाटवी ।
शाखामण्डललीनपन्नगफणामाणिक्यबालातप-
स्पर्शाम्रेडितपल्लवीकृतजरत्पत्रैः पटीरद्रुमैः ॥ ९ ॥

## ॥ पर्वतपद्धतिः ॥ ५ ॥

अस्ति विद्याधरवधूविलासहसितद्युतिः ।
जाह्नवीनिर्झरोष्णीषः शर्वाणीजनको गिरिः ॥ १ ॥

यस्याश्मकूटसङ्घट्टविशीर्यन्निर्झरोत्थिताः ।
मुहूर्तं तारकायन्ते व्योम्नि गङ्गाम्बुशीकराः ॥ २ ॥

e. Murāri.

यः प्रांशुरग्निनिवहैः विदधाति मुहुर्मुहुः ।
त्रिदिवोद्यानहंसानां मृणालकवलभ्रमम् ॥ ३ ॥

यः शुभ्रशिखरो भाति शिवमौलीन्दुदर्शनात् ।
तरङ्गालिङ्गिताभ्रश्रीः क्षीरार्णव इवोत्थितः ॥ ४ ॥

फेनहासविलासिन्यः फुल्लत्कुवलयेक्षणाः ।
विभान्ति कटके यस्य तरङ्गिण्यो महीभृतः ॥ ५ ॥

अस्ति त्रिभुवनाधारो मेरुर्नाम महागिरिः ।
गृणन्ति[1] श्रुतयो येन स्थिरधन्वानमीश्वरम् ॥ ६ ॥

यस्योभयमपि पावनमतितरसामान्यवैभवस्य गिरेः ।
स्थावरमाविर्गङ्गं जनितजगज्जननि जङ्गमं च वपुः ॥ ७ ॥

शुनासीरस्तम्बेरमदशनदम्भोलिदलन-
स्फुटद्ग्रावस्फूर्जज्ज्वलनकणखद्योतितदिशः ।
सुमेरोः सीमानः सुरभटवधूटीनिधुवन-
श्रमभ्रश्यन्मुक्तासिकतिलतला जाग्रति मुदे ॥ ८ ॥

विन्ध्याद्रिर्नयने विनोदयति मे वेतण्डशुण्डार्गल-
क्रीडाताडनलोलतालशिखरभ्रश्यद्रसार्द्रोपलः ।
गोलाङ्गूलविधूतपादपशिरः प्रेङ्खोलगोलक्षरत्-
क्षौद्रस्यान्दिरसाभिलाषुकजरद्भल्लकनिर्लीढभूः ॥ ९ ॥

अग्रेसिंहनखच्युतद्विपशिरोरक्तार्द्रमुक्तावली-
मिथ्यादाडिमबीजखण्डनवृथाव्यापारसीदच्छुकाः ।
अन्तस्त्राससमुदीरयन्त्यजगरग्रीवामुखान्तर्गत-
क्रन्दद्दैरवभूरिमायुमुखरा विन्ध्याटवीवीथयः ॥ १० ॥

वीक्ष्यन्ते विन्ध्यभागा वनमहिषकुलक्रूरशृङ्गप्रहार-
त्रुट्यद्वल्मीकमुक्तस्फुटितफणिफणाशीर्णरत्नस्फुलिङ्गाः ।
एतेष्वाराधयन्ति प्रचलदसिलतोत्कृत्तकण्ठप्रणाली-
निष्ठ्यूतस्फीतमुक्तैर्नरबलिभिरमी भैरवा भद्रकालीम् ॥ ११ ॥

---

१. गिरन्ति- $S_1$.



वप्रक्रीडाविनम्रो द्विप इति दलिते तीव्रनादे पयोदे
प्राक्पीतं धातुताम्रं विसृजति करकैर्मिश्रितं वारिवर्षम् ।
सिंहास्तत्कुम्भमुक्ताशबलितरुधिरश्रद्धया यत्र पीत्वा
व्यर्थायासा व्यथन्ते विदितजलरसा वीक्ष्यतां विन्ध्य एषः ॥ १२ ॥

## ॥ सरित्पद्धतिः ॥ ६ ॥

क्वचिच्च कृष्णोरगभूषणेव भस्माङ्गरागा तनुरीश्वरस्य ।
पश्यानवद्याङ्गि विभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ १ ॥

गच्छ स्वैरं गजमुखमहामोदगर्वोद्वहां
शृङ्गाघातैः शिथिलिततटीं श्रीमता शाङ्करेण ।
पाथःक्रीडापरिचयवतीं पार्वतीशूलपाण्योः
पारावारप्रथममहिषीं पावनीं कृष्णवेणीम् ॥ २ ॥

आदावादिपितामहस्य नियमव्यापारपात्रे जलं
पश्चात्पन्नगशायिनो भगवतः पादोदकं पावनम् ।
भूयः शम्भुजटाविभूषणमणिर्जह्नोर्महर्षेरियं
कन्या कल्मषनाशिनी भगवती भागीरथी दृश्यते ॥ ३ ॥

तस्माद् गच्छेरनुकनखलं शैलराजावतीर्णां
जह्नोः कन्यां सगरतनयस्वर्गसोपानपङ्क्तिम् ।
गौरीवक्त्रभ्रुकुटिरचनां या विहस्येव फेनैः
शम्भोः केशग्रहणमकरोदिन्दुलग्नोर्मिहस्ता ॥ ४ ॥[f]

महाराजोऽपि ते तोये मग्नो भिक्षुर्दिगम्बरः ।
गङ्गे तुङ्गतरङ्गाङ्गे मादृशां कीदृशी गतिः ॥ ५ ॥

## ॥ वसन्तपद्धतिः ॥ ७ ॥

क्षीरक्षालितचन्द्रेव जलधौताम्बरेव च ।
टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत ॥ १ ॥

किंशुकव्यपदेशेन तरुमारुह्य सर्वतः ।
दग्धादग्धामरण्यानीं पश्यतीव विभावसुः ॥ २ ॥[g]

---

f. Kālidāsa: Meghadūta. g. Bhāmaha.

कोकिलालापसुभगाः सुगन्धिवनवायवः ।
यान्ति सार्धं जनानन्दैर्वृद्धिं सुरभिवासराः ॥ ३ ॥

मूलेषु पुष्पानिबिडेषु महीरुहाणा-
मारुह्य पुष्पकलिकाकमनीयनावम् ।
आन्दोलिता मलयमारुतनाविकेन
पारं प्रयान्ति मधुपा मकरन्दनद्याम् ॥ ४ ॥

वाटीषु वाटीषु वनद्रुमाणां मन्दं प्रविष्टा मधुमासलक्ष्मीः ।
कोलाहलैः कोकिलसुन्दरीणां वाचालयन्ती वलयं दिशानाम् ॥ ५ ॥

चिरकालवियोगमूर्च्छिताङ्गं
वनलक्ष्मीमधुना निषिच्य किञ्चित् ।
मधुना परिवीज्य माधवोऽयं
पिकवाचा परिबोधयन्निवास्ते ॥ ६ ॥

असौ मरुच्चुम्बितचारुकेसरः
प्रसन्नताराधिपमण्डलाग्रणीः ।
वियुक्तरामातुरदृष्टिवीक्षितो
वसन्तकालो हनुमानिवागतः ॥ ७ ॥[h]

उद्यद्विद्रुमकान्तिभिः किसलयैस्ताम्रां त्विषं बिभ्रतो
भृङ्गालीविरुतैः कलैरविशदव्याहारलीलाभृतः ।
भ्राम्यन्तो मलयानिलाहतिचलैः शाखासहस्रैर्मुहु-
र्भ्रान्तिं प्राप्य मधुप्रसङ्गमधुना मत्ता इवामी द्रुमाः ॥ ८ ॥[i]

क्व सा निशा पुण्यवतीभिराप्यते
न दृश्यते यत्र निशाकरो रिपुः ।
इतीव तन्व्याः परिदेवनान्तरे
कुहूः कुहूरित्ययमाह कोकिलः ॥ ९ ॥

कतिचिद् दिवसानि काण्डशेषाः
पतिताशेषपुराणजीर्णपर्णाः ।
तरवस्त्वचि गर्हितप्रवालाः
समवाप्यन्त न नामतो विवेक्तुम् ॥ १० ॥

h. SBhg. i. SBhg.



अग्रे स्त्रीनखपाटलं कुरवकं श्यामं द्वयोर्भागयो-
र्बालाशोकमुपोढरागसुभगं भेदोन्मुखं तिष्ठति ।
ईषद्बद्धरजःकणाग्रकपिशा चूते नवा मञ्जरी
मुग्धत्वस्य च यौवनस्य च सखे मध्ये मधुश्रीः स्थिता ॥ ११ ॥[j]

पाकात्तीरैकभाजां हरितरुचिमुचां यत्फलानां रसेन
श्रीसौभाग्येन जिग्ये मरकतकुतुककोडजाम्बूनदेन ।
पुष्पेषोरस्त्रकोशः शुकभवनभटः स्वस्ति वस्त्यं पिकाना-
माम्रः साम्राज्यलक्ष्मीमनुभवतितरामत्र कान्ते वसन्ते ॥ १२ ॥

भद्रश्रीपर्वतोद्यत्पवनमृदुचलद्वल्लरीचारुदोला-
हेलारूढान्यपुष्टापरिवृढपरिषद्वन्दिभिर्वन्द्यमानः ।
प्रद्युम्नस्य प्रचण्डप्रथमपरिकरः प्रादुरासीद् वसन्तो
माकन्दाङ्कूररङ्गस्थलवलदलिनीनर्तकीसूत्रधारः ॥ १३ ॥

अङ्कुरिते पल्लविते कोरकिते कुसुमिते च सहकारे ।
अङ्कुरितः पल्लवितः कोरकितः कुसुमितश्च हृदि मदनः ॥ १४ ॥[k]

बालेन्दुवक्राण्यविकासभावाद्बभुः पलाशान्यतिलोहितानि ।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम् ॥ १५ ॥[l]

मुद्रान्विते माधवेऽस्मिन् दैवात् स्वयमुपागते ।
माकन्दं प्राप्य मोदन्ते कलकण्ठा द्विजातयः ॥ १६ ॥

इह पढमं महु मासो
जणस्स हिअआइ कुणइ मिउळाइ ।
पञ्जा विरइ कामोळद्धप्पसरे हि कुसुमबाणेहिं (?) ॥ १७ ॥

## ॥ मलयानिलपद्धतिः ॥ ८ ॥

मलयादवतीर्य लङ्घयन्तः
सरितं मौक्तिकमातरं समीराः ।
मधुरापुरहर्म्यमण्डनानां
पदमातन्वत पङ्क्तिषु द्विजानाम् ॥ १ ॥

j. Kālidāsa. k. Dhvanyāloka.
l. Kālidāsa (Kumārasambhava).

तुङ्गं तरङ्गनिवहं विकिरन् पयोधेः
पङ्कं च पाण्ड्यवनिताकुचकुङ्कुमानाम् ।
भिन्दन् पटीरतरुपल्लवमुल्लसन्तं
मन्दं प्रवाति मलयाचलगन्धवाहः ॥ २ ॥

विविधविकचपुष्पामोदभारोपजात-
श्रम इव कृतमन्दस्पन्दनो गन्धवाहः ।
उपवनमदवीयः शंसतीवोन्मदानां
परभृतयुवतीनां दीर्घयन् मञ्जुकूजान् ॥ ३ ॥

चूतश्रेणीपरिमलमुषश्चञ्चरीकानुयाता
भूयो भूयः कुवलयकुटीकोटरे लीयमानाः ।
मन्दं मन्दं सुरतविरतौ वान्ति सीमन्तिनीनां
गण्डाभोगश्रमजललवग्राहिणो गन्धवाहाः ॥ ४ ॥

एते बालपटीरपादपशिखादोलावलत्पन्नगी-
खेदस्वेदमुषो वहन्ति मलयोद्भ्रान्ता दिनान्तानिलाः ।
ये लङ्कापुरहेमहर्म्यवलभीनिद्राणनक्तञ्चरी-
निःश्वासानिलनीयमानमदिरासौरभ्यसारस्पृशः ॥ ५ ॥

कलिकातोरणमाळियातरळिनो त्रीभव्भवं सासमा
दीदोळीचयदूदणं दुमवणा कप्पूरसम्पक्किणो ।
तक्कोळादळकीपणाफणिळयाणिव्विघ्घणाट्टाविया
चण्डं चुम्बिय तिव्वलण्णि सलिमा आयेत्ति चेत्ताळिणा (?) ॥ ६ ॥

जे ळंकागिरिमेहळाहि खलिया सम्भोअखिण्णोरई-
फारुप्फुल्लफणावळीकवळणे पत्ता दरिद्दत्तणं ।
ते एण्हि मळआणिला विरहिणीणीसाससंपक्किणो
जा आ झत्ति सिसुत्तणे वि बहळा तारुण्णपुण्णाविय ॥ ७ ॥[m]

* लतां पुष्पवतीं स्पृष्ट्वा कृतस्नानो जलाशये ।
पुनस्तत्सङ्गशङ्कीव वाति वातः शनैः शनैः ॥ ८ ॥

---

* from Sangraha only.

m. Rājaśekhara: कर्पूरमञ्जरी.



## ॥ ग्रीष्मपद्धतिः ॥ ९ ॥

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः ।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः ॥ १ ॥[n]

सर्वाशारुधि दग्धवीरुधि सदा सारङ्गबद्धक्रुधि
क्षामक्ष्मारुहि मन्दमुन्मधुलिहि स्वच्छन्दकुन्दद्रुहि ।
शुष्यत्स्रोतसि तप्तभूरिरजसि ज्वालायमानाम्भसि
ग्रीष्मे मासि ततार्कतेजसि कथं पान्थ व्रजन् जीवसि ॥ २ ॥[o]

अपां मूले लीनं मृदुपरिचितं चन्दनरसे
मृणालीहारादौ कृतलघुपदं चन्द्रमसि च ।
मुहूर्तं विश्रान्तं सरसकदलीकाननतले
प्रियागाढाश्लेषे निवसति परं शैत्यमधुना ॥ ३ ॥

विश्लेषो जनितः प्रियैरपि जनैरुज्जृम्भितं नालिकैः
मित्रेणापि खरायितं तरलया दीर्घायितं तृष्णया ॥
गुर्वी वल्लभता जडैरधिगता दोषाकरः सेव्यते
भोः कालः किमयं कलिः ? नहि नहि प्राप्तः स घर्मागमः ॥ ४ ॥[p]

फलितौदुम्बरान्तःस्था कलशब्दापि कोकिला ।
न भात्यर्थपरेव स्त्री निषण्णा स्थविरोरसि ॥ ५ ॥[q]

पक्षान्तरगतैः शावैरातपार्ताः शकुन्तकाः ।
सुषुपुः कुञ्चितग्रीवाः कुलायेषु महीरुहाम् ॥ ६ ॥

तृषिता बहुनिर्मुग्धा हरिणा मृगतृष्णया ।
लुब्धानां प्रियया वाचा निर्धना इव साधवः ॥ ७ ॥

प्रतिगंतमर्थिजनानां विच्छिन्नाशं समूहमवलोक्य ।
स्फुटितं पयसस्तापादिव हृदयमलं तडागस्य ॥ ८ ॥

प्रवृद्धतापो दिवसोऽतिमात्रमत्यर्थमेव क्षणदा च तन्वी ॥
उभौ विरोधक्रियया विभिन्नौ जायापती सानुशयाविवास्ताम् ॥ ९ ॥[r]

---

n. Kālidāsa. o. Vallabhadeva: 1708.
p. Vallabhadeva: 1707. q. Vallabhadeva: 1696.
r. Kālidāsa.
१ °हत°– M.

अभूदलिविलासिनीदलितकेसरं केसरं
जहास कुसुमायुधायुधमतल्लिका मल्लिका ।
व्यजृम्भत मनोभवज्वलनपाटलं पाटलं
व्यदीर्यत वियोगिनीहृदयकम्पकं चम्पकम् ॥ १० ॥

दिने दिने शैवलवन्त्यधस्तात्
सोपानपर्वाणि विमुञ्चदम्भः ।
उद्दण्डपद्मं गृहदीर्घिकाणां
नारीनितम्बद्वयसं बभूव ॥ ११ ॥

नवेषु सायन्तनमल्लिकानां
विजम्भृणोद्गन्धिषु कुड्मलेषु ।
प्रत्येकनिक्षिप्तपदः सशब्दं
संख्यामिवैषां भ्रमरश्चकार ॥ १२ ॥

मल्लिकामुकुले भाति मञ्जु कूजन्मधुव्रतः ।
पञ्चबाणप्रयाणाय शङ्खमापूरयन्निव ॥ १३ ॥

प्रायश्चरित्वा वसुधामशेषां
छायासु विश्रम्य ततस्तरूणाम् ।
प्रौढिं गते सम्प्रति तिग्मभानौ
शैत्यं शनैरन्तरपामयासीत् ॥ १४ ॥[s]

शृङ्गापातविशीर्णपार्श्वसलिला दीर्घं श्वसन्तः शनैः
रोमन्थस्फुटदृष्टदन्तनिकराः पर्यन्तमीलद्दृशः ।
मज्जन्तः क्षणमप्सु तत्र सहसोन्मज्जन्त एव क्षणं
माद्यन्तो दिवसान् नयन्ति महिषाः काले कठोरातपे ॥ १५ ॥

आननन्द मकरन्दपिपासुः मल्लिकाकुसुमकोटरशायी ।
षट्पदः करिविषाणकरण्डक्रोडपीनमृगनाभिसनाभिः ॥ १६ ॥

समये सुलभभ्रमाम्बुलेशे भृशमङ्गाङ्गसमागमासहिष्णौ ।
अबलासु विलासिनोऽन्वभूवन् नयनैरेव नवोपगूहनानि॥ १७ ॥

पक्षच्छायावकाशं नयति सहचरीं घर्मितां चक्रवाको
हातुं पातुं च पद्मे मधु मधुपवधूर्नैव शक्नोति तप्तम् ।
अन्तश्छायाच्छलेन द्युमणिरपि जलं गाहते घर्मतापात्
उद्दण्डं पद्मषण्डं क्वथितजलभयात् गन्तुमुत्तिष्ठतीव ॥ १८ ॥

---

s. SBhg: ( quoted in कुवलयानन्द ).



## ॥ प्रपापद्धतिः ॥ १० ॥

दूरादेव कृतोऽञ्जलिर्न तु पुनः पानीयपानार्थिना
रोमाञ्चोऽपि निरन्तरं प्रकटितः प्रीत्या न शैत्यादपाम् ।
रूपालोकनविस्मितेन चलितो मूर्धा न शान्त्या तृषा-
मक्षुण्णो विधिरध्वगेन घटितो वीक्ष्य प्रपापालिकाम् ॥ १ ॥[t]

कुम्भीनालमुखार्धलीनविविधव्यापारितार्धाङ्गुलि-

च्छायादत्तनवाधिवासकुसुमाशङ्कामियं कामतः ।
धारां साकमपामपाङ्गवलनैरावर्जयन्ती मुखे
तृष्णां मे किमपाकरोति कुरुते किं वा प्रपापालिका ॥ २ ॥

पिबन्नम्भः प्रपापालिमनुरक्तां विलोकयन् ।
अगस्त्यं चिन्तयामास चतुरः सापि सागरान् ॥ ३ ॥

ग्रीष्मे मासि कठोरसूर्यकिरणे सन्तप्तगात्रो भवान्
अस्मिन्कुब्जपटीसुशीतलतले भो पान्थ विश्राम्यताम् ।
एकाकी च भवानहं च तरुणी शून्या प्रपा वर्तते
......चतुरो जानासि कालोचितम् ॥ ४ ॥

## ॥ वर्षापद्धतिः ॥ ११ ॥

पयोमुचः परीतापं हरन्त्येते शरीरिणाम् ।
नन्वात्मलाभो महतां परदुःखोपशान्तये ॥ १ ॥

मेघकृष्णाजिनधरा धारायज्ञोपवीतिनः ।
मारुतापूरितगुहाः प्राधीता इव पर्वताः ॥ २ ॥

कशाभिरिव हैमीभिर्विद्युद्भिरभिताडितम् ।
अन्तस्तनितनिर्घोषं सवेदनमिवाम्बरम् ॥ ३ ॥

सुरतामर्दविच्छिन्नाः स्वर्गस्त्रीहारमौक्तिकाः ।
पतन्तीवाकुला दिक्षु तोयधारा समन्ततः ॥ ४ ॥

निलीयमानैर्विहगैर्निमीलद्भिश्च पङ्कजैः ।
विकसन्त्या च मालत्या गतोऽस्तं ज्ञायते रविः ॥ ५ ॥

---

t. Vallabhadeva, 1709.

अदृष्टपूर्वमस्माभिः यदि तद्दृश्यतेऽधुना ।
विषं विषधरैः पीतं मूर्छिताः पथिकाङ्गनाः ॥ ६ ॥

वियोगिनां हर्तुमसून्व्यवस्यन्
कृत्वा पुरो मारुतफूत्कृतानि ।
विद्युन्मणीनभ्रफणादुदस्य-
न्वियद्भुजङ्गो विषमुद्ववाम ॥ ७ ॥

उपरि घनं घनपटलं तिर्यग्गिरयोऽपि नर्तितमयूराः ।
क्षितिरपि कन्दलधवला दृष्टिं पथिकः क्व पातयतु ॥ ८ ॥[u]

उपरि पयोधरपटलं दूरे दयिता किमेतदापतितम् ।
हिमवति दिव्यौषधयो क्रोधाविष्टः फणी शिरसि ॥ ९ ॥[v]

क्षपां क्षामीकृत्य प्रसभमपहृत्याम्बु सरितां
प्रताप्योर्वीं कृत्स्नां तरुगहनमुच्छोष्य सकलम् ।
क्व सम्प्रत्युष्णांशुर्गत इति तदन्वेषणपरा-
स्तडिद्दीपालोका दिशि दिशि चरन्तीव जलदाः ॥ १० ॥[w]

खण्डैरम्बुदकम्बलस्य निबिडस्यूतां तटित्तन्तुभिः
कन्थामम्बरगर्भसन्तततया गुर्वीममी बिभ्रतः ।
उद्ग्रीवैः शिखिभिः सचर्मकरकावात्यानिलैः छत्रिणो
घर्मापायदिनाध्वगाः कतिचन प्रादुर्भवन्त्यग्रतः ॥ ११ ॥

पाथोदैः पटवेश्मपा क्व (क्त) पृथुभिः पर्यन्तनिर्यत्पयो-
धारादर्शितदीर्घपाशपटलीसंसक्तदिक्शङ्कुभिः ।
व्यक्तेन्द्रायुधतोरणैः निबिडिताभोगं नभोगं वरं
प्रस्थानोद्यतपञ्चबाणशिबिरश्लाघां समाकाङ्क्षति ॥ १२ ॥

वर्षापारवधूजनः स्नपयते शेषस्फटामण्डली-
माणिक्यासनसंश्रितां वसुमतीमम्भोदकुम्भोदकैः ।
एतस्या घननादमेदुरमदोन्मीलन्मयूरावली-
केकाकूहुभृतो भवन्ति गिरयः सस्नेहसौस्नातिकाः ॥ १३ ॥

सन्ध्यारागोत्थितैस्ताम्रैरन्तेष्वधिकपाण्डरैः ।
स्निग्धैरभ्रपटच्छेदैर्बद्धं व्रणमिवाम्बरम् ॥ १४ ॥

u. ( Vallabhadeva, 1744 ) Bhartṛhari.
v. Vallabhadeva: 1745. w. SBhg.



घर्मातङ्कमुषः कदम्बमुकुलग्रन्थिच्छिदः केतकी-
प्रेयांसः कलहंसवंश[1]विपदः क्षेमंकराः केकिनाम् ॥
अम्भः[2] शीकरहारिणो जलमुचामप्यग्रमग्रेसराः
प्रायः प्रोषितमृत्यवः प्रतिदिशं प्रेङ्खन्ति वर्षानिलाः ॥ १५ ॥

काले कथञ्चिच्चरतां घनानां
कान्त्या स्वया कर्दमितेऽन्तरिक्षे ।
अम्भोधराः श्रान्तिजुषामभूवन्
आलम्बदण्डा इव वारिधाराः ॥ १६ ॥

प्रतस्थिरे पल्लवरागताम्रैरितस्ततो भूतलमिन्द्रगोपैः ।
पयोभिरादाय समं पयोधेः पयोदमुक्तैरिव पद्मरागैः ॥ १७ ॥

स्फुरन्तः पिङ्गलाभासो धरण्यामिन्द्रगोपकाः ।
सरक्तवान्तपान्थस्त्रीजीवा इव चकाशिरे ॥ १८ ॥

कालाम्बुदेन्दीवरकाननानां नाला इवाभान्ति नवाम्बुधाराः ॥...१९ ॥

इन्द्रगोपकपरम्परा भृशं काननेषु शुशुभे विसर्पिणी ।
प्रावृषः सरभसागमाच्युता पद्मरागघटिकेव कर्णिका ॥ २० ॥

भ्रष्टैर्मेघशुकाघातैर्दलितादर्कदाडिमात् ।
बीजैरिव महापिङ्गैः पूरिता शक्रगोपकैः ॥ २१ ॥

श्यामलाः प्रथमतोऽपि वामनाः मङ्गलाय जगतां समुन्नता ।
पद्मयेव जनितापरिष्कृता व्योम्नि शार्ङ्ग इवाबभुर्घनाः ॥ २२ ॥

कन्दलीषु कुटजेषु मालतीजालकेषु नवकेतकीषु च ।
कन्थरासु मधुना सुकेकिनां संविभक्त इव वारिदोदयः ॥ २३ ॥

सौधतोरणविटङ्कवासिनां दृश्यतां मदवशात् कलापिनाम् ।
यामिनीषु तटितो विरेजिरे दीपिका इव पयोददर्शकाः ॥ २४ ॥

## ॥ शरत्पद्धतिः ॥ १२ ॥

स्नपयित्वा वसुमतीं जीमूतकलशोदकैः ।
प्रावृड् गताम्बरं स्वच्छं गृहीत्वा शरदागता ॥ १ ॥

१. रिपवः $S_1$. २. अन्तः $S_1$.

दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः ।
नवसङ्गमसव्रीडा जघनानीव योषितः ॥ २ ॥[x]

मयूरा नूनमातस्थुः परित्यक्तमदा वने ।
असारतां परिज्ञाय संसारस्येव योगिनः ॥ ३ ॥

उत्सृज्य जलसर्वस्वं विमलाः सितमूर्तयः ।
तत्यजुश्चाम्बरं मेघा विग्रहं योगिनो यथा ॥ ४ ॥

अपीतक्षीबकादम्बमसंमृष्टामलाम्बरम् ।
अप्रसादितसूक्ष्माम्बु जगदासीन्मनोहरम् ॥ ५ ॥

बभूव गाढसन्तापा मृणालवलयोज्ज्वला ।
उत्केव चन्दनापाण्डु घनस्तनवती शरत् ॥ ६ ॥[y]

अनुदिनवर्धिततापा वाप्यः शुष्का महीनवर्धिततापा ।
वप्राणां कलमवतां भद्रं गीतं च शुश्रुवे कलमवताम् ॥ ७ ॥

परवनितयेव शरदा सम्प्रत्युपजानिततीव्रसन्तापः ।
क्षपयित्वा घनसम्पदमम्बरशेषः कृतः सविता ॥ ८ ॥[z]

शरदि रवितप्ता बिभ्राणाः शोषमतिशयग्लपिताः ।
ज्वरिता इव लक्ष्यन्ते लङ्घनयोग्या महासरितः ॥ ९ ॥

चतुरुदधिपानचेष्टा दृष्टपिपासे मुनावुदयमाने ।
पाययितुमिवात्मानं विशोध्य सज्जीभवन्त्यापः ॥ १० ॥

ऐन्द्रं धनुः पाण्डुपयोधरेण
शरद्दधानार्द्रनखक्षताभम् ।
प्रमोदयन्ती सकलङ्कमिन्दुं
तापं रवेरभ्यधिकं चकार ॥ ११ ॥[a]

विजितमपि पक्ष्मलाक्ष्या बिम्बाधरशोभया वराकमिदम् ।
विकसति बन्धूकमहो रागवतः कीदृशी लज्जा ॥ १२ ॥

पद्मगन्धिनि नवोत्पलेक्षणे कोमलेन्दुतिलके शरन्मुखे ।
बन्धुजीवकुसुमाधरे पिबन्मालतीमपि जहौ मधुव्रतः ॥ १३ ॥

x. Vālmīki ( Kiṣ. XXX 58 ).  y. Vallabhadeva.
z. Vallabhadeva, 1796.  a. Vallabhadeva.



योषितां चिकुरवासनिर्वृतिर्ध्यायतेव विपिने दुरासदा ।
जीर्यतानुदिवसं हतत्विषा केतकेन करुणं स्म शुष्यते ॥ १४ ॥

कालोपलब्धं कलहंसनादमाकर्ण्य कर्णामृतमन्तरिक्षे ।
सलीलमुद्घाटितवारिपूरा सरोजिनी सादरमुज्जगाम ॥ १५ ॥

अमी पृथुस्तम्भभृतः पिशङ्गतां गता विपाकेन फलस्य शालयः ।
विकासि वप्राम्भसि गन्धसूचितं नमन्ति निघ्रातुमिवासितोत्पलम्[a] ॥ १६ ॥

असावनास्थापरयावधीरितः सरोरुहिण्या शिरसा नमन्नपि ।
उपैति शुष्यन्कलभः सहाम्भसा मनोभुवा तप्त इवाभिपाण्डुताम्[b] ॥ १७ ॥

अथ प्रसन्नेन्दुमुखी सिताम्बरा समाययावुत्पलपत्रलोचना ।
सपङ्कजा श्रीरिव गां निषेवितुं सहंसबालव्यजना शरद्वधूः ॥ १८ ॥[c]

नीतोऽस्मि येन महतीं सलिलेन वृद्धिं
संयोजितश्च सततं गुरुणा फलेन ।
तच्छोष्यते दिनकृतेत्यतिचिन्तयेव
शोकान्वितं तदपि शालिवनं विपाण्डु ॥ १९ ॥[d]

अक्ष्णोर्विपक्ष इति सानुशयं लुलाव
नीलोत्पलं यदबला कलमस्य गोप्त्री ।
भूयस्तदेव शिरसावहदुन्नतानां
वैरं विरोधिषु दृढं न पराजितेषु ॥ २० ॥[e] *

## ॥ हेमन्तपद्धतिः ॥ १३ ॥

हे पान्थ प्रियविप्रयोगहुतभुग्ज्वालानभिज्ञोऽसि किं
किं वा नास्ति तव प्रिया गतघृणः किं वासि हीनो धिया ।
येनास्मिन्नवकुङ्कुमोपरुचिरव्यासङ्गधर्मोचिते
कुन्दानन्दितमत्तषट्पदकुले काले गृहान्निर्गतः ॥ १ ॥[f]

a. Bhāravi.  b. SBhg;  c. Vallabha: 1818.
d. Vallabhadeva: 1822.  e. Vallabhadeva: 1820.
f. Subhāṣitāvalī.
*Here ends M.

हेमन्ते दधिदुग्धसर्पि[1]रशनाः प्रक्लिन्नवासोवृतः
काश्मीरद्रवसान्द्रलिप्तवपुषः खिन्ना विचित्रे[2] रतैः ।
पीनोरुस्तनकामिनीकृतघनाश्लेषा गृहाभ्यन्तरे
ताम्बूलीदलपूगपूरितमुखाः धन्याः सुखं शेरते ॥ २ ॥

हे हेमन्त स्मरिष्यामि याते त्वयि गुणद्वयम् ।
अयत्नशीतलं वारि निशाश्च सुरतक्षमाः ॥ ३ ॥[g]

## ॥ शिशिरपद्धतिः ॥ १४ ॥

प्रावारैरङ्गारैर्गर्भगृहैः स्तनतटैश्च दयितानाम् ।
सन्तर्जितं समन्तान्निपतति शीतं दरिद्रस्य ॥ १ ॥

आहूतोऽपि सहायैरेमीत्युक्त्वा विमुक्तनिद्रोऽपि ।
गन्तुमना अपि पथिकः सङ्कोचं नैव शिथिलयति ॥ २ ॥[h]

आश्लेषणैः पृथुतरस्तनयातशीत-
मायामिनीर्घनमुदारमणार्युवानः ।
ऊर्वा मुहुर्वलनबन्धनसन्धिनोऽपि
पादान्तसंवलिततूलपटाः स्वपन्ति ॥ ३ ॥

नितम्बालसगामिन्यः पीनोन्नतपयोधराः ।
मनोजाय नमस्तुभ्यं यस्यायतनमङ्गनाः ॥ ४ ॥

मुख्या[3]भिधा मुरारिपोर्हृदयंगमासी-
दङ्गीकृता च गिरिशेन सदायदाय (?)
आब्रह्मकीटविजयेऽप्यनिशं सवीर्यैः
सोऽयं सुखाय भवताद्भवतां मनोभूः ॥ ५ ॥

## ॥ सामान्यपद्धतिः ॥ १५ ॥

मुखमखिलं नयनयुगं वक्षः सर्वं पयोधरद्वन्द्वम् ।
मध्यमशेषं गगनं तस्याः कन्दर्पकोमले वयसि ॥ १ ॥

g. Subhāṣitāvalī: 1930.
h. Quoted by Anandavardhana.
१ नाशनीं–$S_1$. २ °विधौ–$S_2$. ३ 'भिदो°–$S_1$.



आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥ २ ॥[i]

कुसुमसुकुमारमूर्तिर्दधती नियमेन तनुतरं मध्यम् ।
आभाति मकरकेतोः पार्श्वस्थालानयष्टिरिव ॥ ३ ॥

अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं
रतिरपि रतिः कामः कामो मधूनि मधून्यपि ।
इति न भजते वस्तु प्रायः परस्परसङ्करं
तदियमबला लक्ष्मीं धत्ते कुतः सकलात्मिकाम् ॥ ४ ॥[j]

नेदं मुखं मृगवियुक्तशशाङ्कबिम्बं
नेमौ स्तनावमृतपूरितहेमकुम्भौ ।
नैवालकावलिरियं मदनास्त्रशाला
नैवेदमक्षियुगलं निगडं हि यूनाम् ॥ ५ ॥[k]

अकृत्रिमप्रेमरसा विलासालसगामिनी ।
असारे दग्धसंसारे सारं सारङ्गलोचना ॥ ६ ॥

## ॥ पादादिवर्णनपद्धतिः ॥ १६ ॥

प्रवालपल्लवच्छायं पादाम्बुजयुगं बभौ ।
रामसागरसञ्चारादिव लग्नारुणद्व[1]यम् ॥ १ ॥

लावण्यनलिनीबालमृणालयुगलोपमे ।
जङ्घाकाण्डयुगे यस्याः कान्तिहंसी व्यरोचत ॥ २ ॥

विलासबर्हिकदलीकाण्डावूरू बभार या ।
पुष्पायुधपुरीकान्तदन्ततोरणविभ्रमौ ॥ ३ ॥

नागेन्द्रहस्तास्त्वचि कर्कशत्वा-
देकान्तशैत्यात्कदलीविशेषाः ।
लब्ध्वापि लोके परिणाहि रूपं
जातास्तदूर्वोरुपमानबाह्याः ॥ ४ ॥[l]

i. Kālidāsa. j. Subhaṣitāvali 1466. k. SBhg.
l. Kālidāsa.
१ द्रवम्–$S_2$.

पुलिनं कान्तिसरितः पर्यङ्कशयनं हरेः।
मेखला परिघं यस्या जघनं मान्मथं पुरम् ॥ ५ ॥

मग्नो नाभिह्रदावर्ते हरकोपानलाकुलः।
कामोऽनुमीयते यस्या रोमालीधूमलेखया ॥ ६ ॥

अस्या यौवनकानने तनुलताच्छन्नेन सन्नाहिता
नाभीपल्वलतः पयोधरगिरिप्रान्तावधिप्रापिणी।
यूनामत्र च रञ्जनाभृगकुलान्याहर्तुमान्विच्छता
सैषा मन्मथलुब्धकेन विहिता रोमावलीवागुरा ॥ ७ ॥

अस्या विधास्यतश्चित्रमवलग्नं मृगीदृशः।
अयासीद्वेधसो नूनमभावः परमाणुताम् ॥ ८ ॥

अन्योन्यमण्डलाक्रान्तौ सन्धिहीनौ करार्थिनौ।
तव तन्वि स्तनावेतौ राजेते भूभुजाविव ॥ ९ ॥

दयिताबाहुपाशस्य कुतोऽयमपरो विधिः।
जीवयत्यर्पितः कण्ठे मारयत्यपवारितः ॥ १० ॥[m]

अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः।
कस्य नो कुरुते बाले पिपासाकुलितं मनः ॥ ११ ॥

निमेषान्निघ्नता लोकं कृष्णस्निग्धेन चारुणा।
कर्णान्तं गच्छता चास्या लोचनेनार्जुनायितम् ॥ १२ ॥[n]

अस्या मनोहराकारकवरीभारनिर्जिताः।
लज्जयेव वने वासं चक्रुश्चमरबर्हिणः ॥ १३ ॥

अस्या दृशौ कुवलयश्रियमाश्रयेते
धत्ते पयोधरभरः करिकुम्भरीतिम्।
अङ्गं तरङ्गयति चम्पकदामकान्ति-
मङ्गीकरोति मुखमैन्दवमाभिरूप्यम् ॥ १४ ॥

## ॥ यौवनारम्भपद्धतिः ॥ १७ ॥

दृष्टिः शैशववर्जिता प्रतिकलं प्रागल्भ्यमभ्यस्यति
प्रावृत्कान्तिमुखस्तथापि कुचयोः शोभां नवामीहते ॥

---
m. Vallabhadeva (1529). n. Vallabhadeva 1498.



नो धत्ते गुरुतां तथापि विजिताभोगा नितम्बस्थली
तन्व्या स्वीकृतयौवनं विजयते नेत्रैकपेयं वपुः ॥ १ ॥

## ॥ उद्यानपद्धतिः ॥ १८ ॥

शिक्षां कामपि दक्षिणानिलनटादासाद्य नृत्तोद्यता
दृष्ट्वा वलितचारुकुड्मलरुचिं चञ्चत्प्रवालाङ्गुलीः।
यत्रोद्यानसभासदस्तरुनटास्तन्वीर्लतालासिकाः
श्लाघन्ते चलमौलयः परभृतां व्याहारहाहारवैः ॥ १ ॥

यत्र खेचरनारीणां रत्ननूपुरराजिभिः।
अशोकाश्चरणाघातैरुत्फुल्ला भान्ति रागिणः ॥ २ ॥

यत्र विद्याधरवधूमधुगण्डूषनिर्झरैः।
जृम्भेवारम्भमुकुलैः पुष्पाननविकासिभिः ॥ ३ ॥

यत्र दिव्याङ्गनातुङ्गस्तनोत्सङ्गतरङ्गिताः।
मन्दारमकरन्दाम्बुसुन्दरा वान्ति वायवः ॥ ४ ॥

## ॥ पुष्पापचयपद्धतिः ॥ १९ ॥

उत्थिताग्रचरणा पृथुस्तनी पुष्पजालमपचिन्वती तरौ।
मध्यभञ्जनभयापदेशतो निस्त्रपा दयितकण्ठमग्रहीत् ॥ १ ॥

उच्छ्रिद्य प्रथममधःस्थितं मृगाक्षी
पुष्पौघं श्रितविटपं ग्रहीतुकामा।
आरोढुं पदमदधादशोकयष्टे-
रामूलं पुनरपि तेन पुष्पितासौ ॥ २ ॥

पाणौ पद्मधिया मधूककुसुमभ्रान्त्या तथा गण्डयो-
र्नीलाम्भोरुहशङ्कया नयनयोर्बन्धूकबुद्ध्याऽधरे।
लीयन्ते चिकुरेषु बान्धवकुलव्यामोहबद्धादरा
दुर्वारा मधुपाः कियन्ति भवती स्थानानि रक्षिष्यति ॥ ३ ॥

## ॥ मध्याह्नपद्धतिः ॥ २० ॥

उष्णालुः शिशिरे निषीदति तरोर्मूलालवाले शिखी
निर्भिद्योपरिकर्णिकारकुसुमान्यासेवते षट्पदः ।
तप्तं वारि विहाय तीरनलिनीं कारण्डवः सेवते
क्रीडावेश्मनि चैव पञ्जरशुकः क्लान्तो जलं याचते ॥ १ ॥

परपुरुषादिव सवितुः सम्प्रति भीताः कराग्रसंसर्गात् ।
कुलवध्व इव सलज्जाः प्रविशन्ति गृहोदरं छायाः ॥ २ ॥

दुःसहसन्तापभयात्सम्प्रति मध्यस्थिते दिवसनाथे ।
छायामिव वाञ्छन्ति च्छायामपि गता तरुतलानि ॥ ३ ॥

नखंपचैः षट्पदकामिनीनां परागपूरैः परुषोदराणि ।
व्यपायसन्दर्शितकर्णिकानि बभूवुरम्भोरुहकाननानि ॥ ४ ॥

छाया संश्रयते तलं विटपिनां श्रान्तेव पान्थैः समं
मूलं याति सरोजलस्य जडता ग्लानेव मीनैः सह ।
आचामत्यचिरांशुदीधितिरपस्तप्तेव सत्त्वैः समं
निद्रागर्भगृहं सह प्रविशति क्लान्तेव कान्ताजनैः ॥ ७ ॥

## ॥ सरित्पद्धतिः ॥ २१ ॥

सरो हरति मच्चेतः प्रोन्मज्जत्पद्मकुड्मलम् ।
वक्षो हरिणशावाक्ष्याः मन्दोदञ्चत्कुचं यथा ॥ १ ॥

उत्फुल्लपङ्कजवनं ददर्श विमलं सरः ।
स्फाटिकं वनदेवीनामिव विभ्रमदर्पणम् ॥ २ ॥

## ॥ सलिलखेलनपद्धतिः ॥ २२ ॥

वारिक्रीडासु गोपीनां वासुदेवात्तवाससाम् ।
प्रावृतः पद्मिनीपत्रं पाणिर्वा पाथ एव वा ॥ १ ॥

पटीः पयोविहारेषु मुष्णन्तं गोपिका हरिम् ।
प्रौढाः पलाययामासुः पाणिक्षिप्तैः पयोधरैः ॥ २ ॥



स्नातोत्थिता वारिधाराहारिण्यस्ताः स्तनैर्बभुः ।
सन्दष्टबिसदण्डाग्रैश्चक्रवाकैरिवाङ्किताः ॥ ३ ॥

अञ्जलौ जलमधीरलोचना
लोचनं पतिशरीरपूरितम् ।
आत्तमात्तमधिकान्तमुक्षितुं
कातरा शफरशङ्कया जहौ ॥ ४ ॥

## ॥ अलङ्कारपद्धतिः ॥ २३ ॥

तालीदलं काचनकर्णपाशौ प्रसारयन्ती सुतनुः कराभ्याम् ।
रराज कर्णान्तनिषण्णदृष्टिः शाणे दधानेव कटाक्षबाणान् ॥ १ ॥

कस्तूरिकातिलकितेन मुखेन काचि-
न्नासाग्रसक्तनवमौक्तिकभूषणेन ।
आरूढभृङ्गमभिलीनहिमाम्बुलेश-
मावृत्तफुल्लमरविन्दमधःकरोति ॥ २ ॥

अङ्गानि कुङ्कुमरजःपरिपूरितानि
ताम्बूलरागसुभगोऽधरपल्लवश्च ।
अच्छाञ्जने च नयने च समं तनीयः
कान्तासुभूषणमिदं भवदस्तु शेषः (?) ॥ ३ ॥

## ॥ अस्तमयपद्धतिः ॥ २४ ॥

एष वारुणदिगङ्गनामुखोद्भासितैकमणिकुण्डलाकृतिः ।
भानुराप सुरवारसुन्दरीपाणिमुक्तमणिकन्दुकश्रियम् ॥ १ ॥

मित्रे क्वापि गते सरोरुहवने बद्धानने ताम्यति
क्रन्दत्सु भ्रमरेषु वीक्ष्य दयिताश्लिष्टं पुरः सारसम् ।
चक्राह्वेन वियोगिना बिसलता नास्वादिता नोज्झिता
वक्त्रे केवलमर्गलेव निहिता जीवस्य निर्गच्छतः ॥ २ ॥°

१. °ह्न°–$S_1$.  २. °कुण्डल°– $S_1$.

o. Kāvyaprakāśa.

शुद्धमाविलमवास्थितं चलं वक्रमार्जवगुणान्वितं च यत् ।
सर्वमेव तमसा समीकृतं धिङ्महत्त्वमसतां हतान्तरम् ॥ ३ ॥

दिवसोऽनुमित्रमगमद्विलयं किमास्यते बत मयाबलया ।
रुचिभर्तुरस्य विरहाधिगमादिति सन्ध्ययापि सपदि व्यगमि ॥ ४ ॥

चञ्चच्चन्द्रकरस्पर्शहर्षोन्मीलिततारका ।
अहो तारावती सन्ध्या जहाति स्वयमम्बरम् ॥ ५ ॥

नीलाम्बुजैरिवाकीर्णं भ्रमरैरिव मूर्च्छितम् ।
नीलकण्ठैरिवोत्कीर्णं चचार रुचिरं तमः ॥ ६ ॥

पद्मसङ्कोचचकिता बभ्रमुर्भ्रमरा मुहुः ।
सन्ध्यया सपदि व्युतास्तमोबीजगणा इव ॥ ७ ॥

जजृम्भे जम्भारिद्विरदगुरुगण्डस्थललस-
न्मदस्रोतोवीचीमलिनिम समीचीनमहिमा ।
निशानारीपीनस्तनकलशनीलांशुकनिभो
नभोरन्ध्रं रुन्धन्निव तिमिरपालीपरिकरः ॥ ८ ॥

## ॥ अभिसारिकापद्धतिः ॥२५॥

मन्दं निधेहि चरणौ परिधेहि वासो
नीलं पिधेहि वलयावलिमञ्चलेन ।
मा जल्प साहसि निशारदचन्द्रकान्त-
दन्तांशवस्तव तमांसि समापयन्ति ॥ १ ॥

मार्गे पङ्किनि तोयदान्धतमसे निःशब्दसञ्चारया
गन्तव्या दयितस्य मेऽद्य वसतिर्मुग्धेति कृत्वा मतिम् ।
आजानोर्धृतनूपुरा करतलेनाच्छाद्य नेत्रे भृशं
कृच्छ्राल्लब्धपदस्थितिः स्वभवने पन्थानमभ्यस्यति ॥ २ ॥

पाथोधौतमुखी प्रमृष्टतिलका सालक्तरक्तांशुका
मेघानां निनदेन भीतहृदया मत्वा प्रियस्यालयम् ।
द्वारं नेच्छति लज्जया प्रलपितुं देवीति वर्षाहता
पादौ नूपुरकर्दमप्रतिहतौ संशब्दयन्ती स्थिता ॥ ३ ॥



आसारसिक्तावरणांशुकाना-
मपि स्तनोष्माण्यभिसारिकानाम् ।
प्रत्युद्व्रजन्तः कृतिनोऽन्वभूव-
न्नुत्कम्पशालीन्युपगूहितानि ॥ ४ ॥

## ॥ चन्द्रोदयपद्धतिः ॥२६॥

अथोज्जगाम ललनाकपोलललितद्युतिः ।
रराज राजतनयाकर्पूरतिलकः शशी ॥ १ ॥

दिक्कान्ताकेलिमुकुरे निशामौक्तिकमण्डने ।
स्मरराजसितच्छत्रे शशिनि श्रीरजृम्भत ॥ २ ॥

त्रिणयनजटावल्लीपुष्पं मनोभवकार्मुकं
ग्रहकिसलयं सन्ध्यानारीनितम्बनखक्षतम् ।
तिमिरभिदुरं व्योम्नः शृङ्गं निशावदनस्मितं
प्रतिपदि नवस्येन्दोर्बिम्बं सुखोदयमस्तु वः ॥ ३ ॥

मनोभवयशस्कराः कुमुदमोदमेदस्करा-
स्तमिस्रगुणतस्कराः पथिकयोषिदागस्कराः ।
कराः कतिचिदैन्दवः कवलयन्ति तारापथं
रथाङ्गविरहज्वरज्वलनकीलतैलद्रवाः ॥ ४ ॥

मयूरनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्चलद्विविधतारकाकपटकीर्णमुक्तागणः ।
पुरन्दरहरिद्दरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ॥ ५ ॥

सबिम्बरेखस्तार्तीयो राजते रजनीकरः ।
जगज्जिगीषोः पञ्चेषोराकृष्टमिव कार्मुकम् ॥ ६ ॥

करैः कतिपयैरिन्दोरैन्द्री हरिदलङ्कृता ।
अभिषेकाय पञ्चेषोरङ्कुरैरिव पालिका ॥ ७ ॥

केतकीदलतां कर्णे तनौ कर्पूररूपताम् ।
हारतां च ययौ ज्योत्स्ना कुचयोर्हरिणीदृशाम् ॥ ८ ॥

---

१. °मति°–S.

## ॥ कलङ्कपद्धतिः ॥ २७ ॥

अङ्कं केऽपि शशङ्किरे जलनिधेः पङ्कं परे मेनिरे
सारङ्गं कतिचिच्च सञ्जगदिरे भूच्छायमैच्छन्परे।
इन्दोर्यद्दलितेन्द्रनीलशकलश्यामं दरीदृश्यते
तत्सान्द्रं निशि पीतमन्धतमसं कुक्षिस्थमाचक्ष्महे॥ १ ॥p

यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहं त्विन्दुं मन्ये त्वदरिविरहक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥ २ ॥

ज्योत्स्नाभस्मच्छुरणधवला बिभ्रती तारकास्थी-
न्यन्तर्धानव्यसनरसिका रात्रिकापालिकीयम्।
द्वीपाद्द्वीपं भ्रमति दधती चन्द्रमुद्राकपाले
न्यस्तं सिद्धाञ्जनपरिमलं लाञ्छनस्य च्छलेन ॥ ३ ॥q

नेदं नभोमण्डलमम्बुराशिर्नैताश्च तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो नासौ कलङ्कः शयितो मुरारिः॥ ४ ॥

## ॥ दूतीपद्धतिः ॥२८॥

न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते च मयि।
निपुणं तथैनमभिगम्य वदे-
रयि दूति काचिदिति सन्दिदिशे॥ १ ॥

उच्यतां वचनीयमशेषं
नेश्वरे परुषता सखि साध्वी।
आनयैनमनुनीय कथं वा
विप्रियाणि कथयन्ननुनेयः॥ २ ॥

p. Bhartṛhari. q. Kāvyaprakāśa.
१. ॰पो॰– $S_1$



## ॥ यानपद्धतिः ॥२९॥

मार्गे दृष्टिः करकिसलये वक्त्रमश्रुप्रवाहो
लोलापाङ्गे समसखिजनस्यांसके केशपाशः।
नीवीलोला मणिगणलसन्मेखला जानुभागे
त्वय्येवाहो हृदयमसवः कण्ठनाले तरुण्याः॥ १ ॥

चित्राय त्वयि चिन्तिते मनसिजश्चक्रेऽथ सज्जं धनु-
र्वर्तिं धर्तुमुपाहितेऽङ्गुलियुगे बाणो गुणे रोपितः।
प्रारब्धे तव चित्रकर्मणि धनुर्मुक्तास्तु भिन्ना भृशं
भित्तिं द्रागवलम्ब्य सिंहलपते सा तत्र चित्रायते॥ २ ॥

बाष्पैरम्बु रजोभरेण वसुधा तापेन सूर्यानलौ
पाण्डिम्ना शशलाञ्छनं पृथुतरैः श्वासानिलैर्मारुतम्।
त्वन्नामाध्ययनेन पूरुषमसद्व्यावृत्तिमात्रान्नभो-
मूर्तीरष्ट समग्रयत्यपि परं कामेन सा दह्यते॥ ३ ॥

## ॥ मानपद्धतिः ॥३०॥

तद्वक्त्राभिमुखं मुखं विनमितं दृष्टिः कृता पादयोः
तत्संलापकुतूहलाकुलतरे श्रोत्रे निरुद्धे मया।
पाणिभ्यां च तिरस्कृतः स पुलकः स्वेदोद्गमो गण्डयोः
सख्यः किं करवाणि यान्ति शतधा मत्कञ्चुलीसन्धयः॥ १ ॥

एकत्रासनसंङ्गतिः परिहृता प्रत्युद्गमाद्दूरतः
ताम्बूलानयनच्छलेन रभसाश्लेषोऽपि संविघ्नितः।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः॥ २ ॥r

## ॥ मानिनीवाक्यपद्धतिः ॥३१॥

कोपो यत्र भ्रुकुटिरचना विग्रहो यत्र मौनं
यत्रान्योन्यस्मितमनुनयो दृष्टिपातः प्रसादः।

१. संस्थितिः –$S_1$.

तस्य प्रेम्णस्तदिदमधुना वैशसं पश्य जातं
त्वं पादान्ते लुठसि न च मे मन्युमोक्षः खलायाः ॥ ३ ॥[r]

बाले नाथ विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
रोषोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि ।
तत्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ ४ ॥[s]

## ॥ मानिनीप्रसादपद्धतिः ॥ ३१ ॥

परिम्लाने माने मुखशशिनि तस्याः करधृते
मयि क्षीणोपाये प्रणिपतनमात्रैकशरणे ।
तया पक्ष्मप्रान्तव्रजपुटनिरुद्धेन सहसा
प्रसादो बाष्पेन स्तनतटविशीर्णेन कथितः ॥ १ ॥[s]

सुतनु जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित्कोप एवंविधाऽभूत् ।
इति निगदति नाथे तिर्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित् ॥ २ ॥[s]

## ॥ मधुपानपद्धतिः ॥ ३२ ॥

विनापि कोपं प्रसभं जहास
पदेऽपि चस्खाल समेऽपि मार्गे ।
अघूर्णमानः स मदातिरेका-
दाकाशमालम्बनमाललम्बे ॥ १ ॥

कृष्णार्जुनानुरक्तापि दृष्टिः कर्णावलम्बिनी ।
याति विश्वसनीयत्वं कस्य नो कलभाषिणि ॥ २ ॥

कुसुमे कुसुमोत्पत्तिः श्रूयते न च दृश्यते ।
बाले तव मुखाम्भोजे दृष्टमिन्दीवरद्वयम् ॥ ३ ॥

असमग्रविलोकितेन कान्ते दयितं पश्य वरोरु निर्विशङ्का ।
नहि जातु कुशाग्रपीतमम्भः सुचिरेणापि करोत्यपेततृष्णाम् ॥ ४ ॥

r. Amaru. s. Amaru.



उत्तरङ्गय कुरङ्गलोचने लोचने कमलगर्वमोचने ।
अस्तु सुन्दरि कलिन्दकन्यकावीचिडम्बरविडम्बनं वरम् ॥ ५ ॥

कथयानिमिषोऽस्म्यहं कथं ते वपुरालोकनमात्र एव जातः ।
अधरामृतपायिनां भवत्या सुरतावाप्तिररालकेशि युक्ता ॥ ६ ॥

पश्यायताक्षि भुवनत्रितयैकजिष्णोः
शिक्षाबलं धनुषि शम्बरशासनस्य ।
भित्वा ममैव हृदयं हृदये निविष्टा
बाणा यदत्रभवतीं न खलु स्पृशन्ति ॥ ७ ॥

विसृज दयिते हारज्योत्स्नां निमीलतु पङ्कजं
विकिर नयने नष्टच्छायं भवत्वसितोत्पलम् ।
वितर वचनं लज्जामूका भवन्तु पिकाङ्गनाः
परपरिभवो मानस्थाने न मानिनि सह्यते ॥ ८ ॥

गङ्गावर्तसमाननाभिविलसद्वल्मीकरन्ध्रान्तरा-
त्तन्वी श्यामलरोमराजिभुजगी निर्गत्य कान्ते तव ।
वक्त्रेन्दुं ग्रसतीति पन्नगभयात्पीनौ स्तनौ सङ्गता-
वित्याख्यातुमिव त्वदक्षियुगलं कर्णान्तमाशिश्रिये ॥ ९ ॥

तमःस्तोमः पूर्वं तदनु सकलः शीतकिरण-
स्ततः कोकद्वन्द्वं तदनु न च किञ्चित्पुनरभूत् ।
अनम्भस्यावर्तः कनककदलीकाण्डयुगली
ततोऽवाञ्चौ पद्मौ शिव शिव विधेः शिल्परचना ॥ १० ॥

पादे पल्लविता स्तने मुकुलिता वक्त्रे विकासं गता
गात्रे कण्टकिता कपोलफलके पत्रावली भास्वरा ।
वक्त्रे मञ्जरितालकेषु सुरभिर्वाक्ये मधुस्यन्दिनी
बाला यौवनमञ्जरी विटपिकानाक्रम्य संवर्धते ॥ ११ ॥

चन्द्रायते मुखं कान्तं हसितं चन्द्रिकायते ।
चन्द्रकान्तशिलायन्ते मादृशां चित्तवृत्तयः ॥१२॥

अये व्याधायसे कान्ते भ्रूलता कार्मुकायते ।
कटाक्षा विशिखायन्ते मनो मे हरिणायते ॥ १३ ॥

१. स°–$S_1$.

जागर्ति लोको ज्वलितः प्रदीपः
सखीजनः पश्यति कौतुकेन ।
मुहूर्तमात्रं कुरु कान्त धैर्यं
बुभुक्षितः किं द्विकरेण भुङ्क्ते ॥ १४ ॥

## ॥ रतारम्भपद्धतिः ॥ ३३ ॥

हृतांशुकं यद्यदङ्गं सन्ददर्श मृगीदृशः ।
दृष्टयस्तत्र तत्रास्य न चेरुः[1] कीलिता इव ॥ १ ॥

इन्द्राय वीक्षमाणस्तन्मुखमास्वदन्ननन्ताय ।
स्पृहयामि चाद्य दयितामालिङ्ग्ये कार्तवीर्याय ॥ २ ॥

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे परिवृत्त्या ।
हुं ममेति वदनान्तरलग्नं जल्पितं जयति मानधनायाः ॥ ३ ॥

स्वं नितम्बमपवाहितांशुकं व्याकुला रहसि[2] पश्यति प्रिये ।
प्रार्थितामपि[3] विनैव वल्लभः स्निग्धमुग्धमधरद्वयं ददौ ॥ ४ ॥

अश्रान्तवर्धितमनोरथयोरलब्ध-
सङ्केतयोर्नयनसङ्गतमात्रवृत्त्योः ।
दैवात्समागतवतोः सुकृतेन लभ्या
स्त्रीपुंसयोर्विजयते प्रथमाङ्कपाली ॥ ५ ॥

शय्यां प्राप्तवति प्रिये क्षणमिव स्थित्वा विदित्वा स्पृहां
आमुच्याभरणानि कञ्चुलिकया न्यस्योपधानान्तिके ।
कुर्वत्याश्चिकुरैरपास्तकुसुमैर्वेणीं विमर्दक्षमां
सन्नाहः स्वदते सरोरुहदृशः सम्भोगलीलाविधेः ॥ ६ ॥

## ॥ रतिपद्धतिः ॥ ३४ ॥

धैर्यस्य यदनायत्तं लज्जाया यदगोचरः ।
यदयुक्तं विचारस्य तदभूत्सुरतं तयोः ॥ १ ॥

मनोरथैर्यदभ्यस्तं हृदयेन यदर्थितम् ।
मन्मथेन यदादिष्टं तयोस्तदभवद्रतम् ॥ २ ॥

१. °लुः–$S_1$. २. व°–$S_1$. ३. र्थनामपि–$S_1$.



चुम्बनेष्वधरदानवर्जितं हस्तरोधि रशनाविघट्टने ।
विघ्नितेच्छमपि तस्य सर्वतो मन्मथेन्धनमभूद्वधूरतम् ॥ ३ ॥

पाणिपल्लवविधूननं ततः सीत्कृतानि नयनार्धनिमेषाः ।
योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य ॥ ४ ॥

## ॥ विपरीतरतपद्धतिः ॥ ३५ ॥

विपरीतरतोद्भूताः पतन्ति स्वेदबिन्दवः ।
ननु पुण्यवतामङ्गेष्वङ्गनावदनाच्च्युताः ॥ १ ॥

मुग्धे तवास्मि दयिता पुरुषो भव त्व-
मित्युक्तया नहि नहीति शिरोऽवधूय ।
स्वस्मात्करात्प्रियकरे वलयं क्षिपन्त्या
वाचं विनाभ्युपगमः कथितो मृगाक्ष्या ॥ २ ॥

तन्व्याः केलिकलास्रस्तकबरीकुसुमोत्थिताः ।
मधुपा मञ्जु गुञ्जन्तः चीत्काराचार्यतां गताः ॥ ३ ॥

श्रोतव्यमस्ति रुचिरं पुरुषायिताना-
मेणीदृशां चरणनूपुरशिञ्जितेभ्यः ।
गन्तव्यमाननसरोरुहमेव तासां
ध्येयं तदूरुयुगलं कुचमण्डलं वा ॥ ४ ॥

उपरिनिपतितानां स्रस्तधम्मिल्लकानां
शिथिलभुजलतानां किञ्चिदुन्मीलितानाम् ।
उपरिसुरतखेदस्विन्नगण्डस्थलाना-
मधरमधु वधूनां भाग्यवन्तः पिबन्ति ॥ ५ ॥[t]

उपरिरतमाचरन्त्यास्तन्व्यास्तत्काल एव पुष्पिण्यः ।
शोणितपूरादङ्गं शूलस्थं पुरुषमनुकुरुते ॥ ६ ॥

## ॥ रतिकलहपद्धतिः ॥ ३६ ॥

दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि नास्मि दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यत्खिद्यते तव पदं ननु सा व्यथा मे ॥ १ ॥

t. Bhartṛhari.

उत्तंसयन्तु कुसुमानि मृदूनि मूर्ध्नि
सम्भोगभङ्गिसुभगाः सततं युवानः ।
नो चेत्प्रहर्तुरपराधिनि वल्लभायाः
पादाम्बुजस्य भविता सुलभो विकारः ॥ २ ॥

सिञ्जन्मञ्जीरमधुपं वामावामपदाम्बुजम् ।
कामिनः कामकलहे शेखरं शिरसावहन् ॥ ३ ॥

सालक्तकं शतदलाधिककान्तियुक्तं
रत्नौघधामनिकरारुणनूपुराढ्यं ।
क्षिप्तं रुषा दयितया सुरतापराधे
सौभाग्यचिह्नमिव मूर्ध्नि पदं विरेजे ॥ ४ ॥

## ॥ रत्यनुनयपद्धतिः ॥ ३७ ॥

रागं दृष्ट्योः स्फुरितमधरे भ्रूलतायां च भङ्गं
दैर्घ्यं श्वासे सुतनु तनुषे किं वृथा मय्यदोषे ।
यद्यस्त्यन्यद्भवतु भगवान्मन्मथस्तत्र साक्षी
किं वामेन त्वमपि हृदि मे साक्षिणी सन्निधत्से ॥ १ ॥

सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ता कथा योषितां
दूरादेव मयोज्झिताः सुरभयः स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दृशः ॥ २ ॥

## ॥ विरहिण्यवस्थापद्धतिः ॥ ३८ ॥

वामा नितान्तरक्तेन लोचनानन्दकारिणम् ।
उवाह मनसा कान्तं पाणिना मुखपङ्कजम् ॥ १ ॥

परिच्युतस्तत्कुचभारमध्यात्
किं शोषमायासि मृणालहार ।
न सूक्ष्मतन्तोरपि तावकस्य
तत्रावकाशो भवतः किमु स्यात् ॥ २ ॥



शय्या पुष्पमयी परागमयतामङ्गार्पणादश्नुते
ताम्यत्यन्तिकतालवृन्तनलिनीपत्राणि देहोष्मणा ।
न्यस्तं च स्तनमण्डले मलयजं दीर्णान्तरं दृश्यते
क्राथादाशु भवन्ति फेनिलमुखा भूषामृणालाङ्कुराः ॥ ३ ॥

## ॥ विरहिणी-आलापपद्धतिः ॥ ३९ ॥

कालं पुरा गरलमम्बुनिधेरुदस्था-
द्यद्येन्दुनाम गरलं विषमभ्युपैति ।
अद्यादिदं स गिरिशो यदि हन्त नश्ये-
त्कार्ण्यं स्वकण्ठकलितं सखि मे भयं च ॥ १ ॥

## ॥ सखीप्रश्नपद्धतिः ॥ ४० ॥

कथमपि सखि क्रीडाकोपाद् व्रजेति मयोदिते
कठिनहृदयस्त्यक्त्वा शय्यां बलाद् गत एव सः ।
इति सरभसत्यक्तप्रेम्णि व्यपेतघृणे स्पृहां
पुनरपि हतव्रीडं चेतः करोति करोमि किम् ॥ १ ॥

मुक्त्वा पुरद्रुहि शरानपि शूलपाणौ
तानेव किं नु मयि मुञ्चति पञ्चबाणः ।
दृष्टं हि लोकत इदं यदयं मृगेन्द्रो
मत्तद्विपे च मशके च समानवीर्यः ॥ २ ॥

अलसविरलैः प्रेमार्द्रार्द्रैर्मुहुर्मुकुलीकृतैः
क्षणमभिमुखैर्लज्जालोकैर्निमेषपराङ्मुखैः ।
हृदयनिहितं भावाकूतं वहद्भिरिवेक्षणैः
कथय सुकृती कोऽयं मुग्धे त्वयाद्य विलोक्यते ॥ ३ ॥

## ॥ सखीवचनपद्धतिः ॥ ४१ ॥

जघनमुन्नतमाकुलमेखलं मुखमपाङ्गविसर्पिततारकम् ।
इदमपास्य गतो यदि निर्घृणो ननु वरोरु स एव हि वञ्चितः ॥ १ ॥

---

१ °ना°–$S_1$.

अनालोच्य प्रेम्णः परिणतिमनादृत्य सुहृदः
त्वयाकान्ते कोपारिकमिति सरले सम्प्रति कृतः।
समाकृष्टास्त्येते विरहदहनोद्भासितशिखाः
स्वहस्तेनाङ्गारास्तदलमधुनारण्यरुदितैः ॥ २ ॥

## ॥ विरहिप्रलापपद्धतिः ॥ ४२ ॥

तन्वङ्ग्या विप्रयुक्तस्य दिवसा यान्ति ये मम।
निर्घृणस्तानपि यमः प्रायेण नमयिष्यति ॥ १ ॥

कचग्रहोत्तानितकुड्मलं मुखं
त्रपावलत्तारकमर्धवीक्षणम्।
बलाद्गृहीताधरखण्डनाकुलं
कदा पिबेयं कमलेक्षणं मुखम् ॥ २ ॥

अद्यापि तन्मनसि सम्परिवर्तते मे
रात्रौ मयि क्षुतवति क्षितिपालपुत्र्या।
जीवेति मङ्गलवचः परिहृत्य रोषात्
कर्णेऽर्पितं कनकपत्रमनालपन्त्या ॥ ३ ॥§

सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः।
सङ्गे सा पुनरेका त्रिभुवनमपि तन्मयं विरहे ॥ ४ ॥

ततोऽरुणपरिस्पन्दमन्दीकृतवपुः शशी।
दध्रे कामपरिक्षामकामिनीगण्डपाण्डुताम् ॥ ५ ॥†

विस्रस्तमाल्यधम्मिल्लं स्वेदमज्जाद्विशेषकम्।
व्यामीलितार्धनयनं तस्याः कान्तमभूद्रतम् ॥ ६ ॥

मयाङ्कमानीय विमर्दविक्लवा
पटान्तलीलाव्यजनेन वीजिता।
तथापि सानन्दजलार्द्रपक्ष्मया
निरीक्ष्य दृष्ट्या पुनरस्मि चुम्बितः ॥ ७ ॥

§. Bilhaṇa. †. Kāvyaprakāśa.



सुरतविरतिकाले सा समुत्तिष्ठमाना
गलितमलकभारं वामहस्ते दधाना।
इतरकरगृहीतस्रस्तकाञ्चीदुकूला
पुनरपि च कपोले चुम्बितालिङ्गिता च ॥ ८ ॥

शान्ते मन्मथसङ्गरे रणभृतां सत्कारमातन्वती
वासोऽदाज्जघनस्य पीनकुचयोर्हारं श्रुतेः कुण्डलम्।
बिम्बोष्ठस्य च वीटिकां सनयना पाण्यो रणत्कङ्कणे
पश्चाल्लम्बिनि केशपाशनिचये युक्तो हि बन्धक्रमः ॥ ९ ॥

## ॥ प्रभातपद्धतिः ॥ ४३ ॥

प्रम्लानताराकुसुमोपहारं मन्दायमानेन्दुमणिप्रदीपम्।
शनैः समुद्घाटितदिक्कवाटं जातं ग्रहाणां गृहमन्तरिक्षम् ॥ १ ॥

दम्पत्योर्निशि जल्पतोर्गृहशुकेनाकर्णितं यद्वचः
तत्प्रातर्गुरुसन्निधौ निगदतस्तस्यातिमात्रं वधूः।
कर्णालम्बितपद्मरागशकलं विन्यस्य चञ्चूपुटे
व्रीडार्ता विदधाति दाडिमफलव्याजेन वाग्बन्धनम् ॥ २ ॥§

शृणु सखि कौतुकमेकं ग्रामैकनिवासिना यदद्य कृतम्।
सुरतसुखमीलिताक्षी मृतेति मत्वा विमुक्तास्मि ॥ ३ ॥

## ॥ सूर्योदयपद्धतिः ॥ ४४ ॥

सौधेषु जालान्तरलब्धमार्गा
रवेः पतन्तस्तरुणा मयूखाः।
प्रत्यादिशन्तीव विलासिनीनां
गण्डेषु कर्णाभरणप्रवालान् ॥ १ ॥

इयं मयि प्रोषित एव सक्ता
हिमत्विषाद्यः कृतमण्डना सती।
इतीर्ष्ययेव द्रुतमाच्छिनत्तदा
विचित्रताराभरणानि भास्करः ॥ २ ॥

प्राचीरामाकराऽलातभ्रममण्डलमालि किम्।
त्वदोष्ठरागरक्तो वा नभस्यभ्युदितो रविः ॥ ३ ॥

§. Amaru.

## ॥ शृङ्गारसङ्करः ॥ ४५ ॥

सनूपुरालक्तकपादताडितो
द्रुमोऽपि यस्यां विकसत्यचेतनः ।
तदङ्गसम्पर्करसद्रवीकृतो
भवत्यहोऽयं न नरस्तदद्भुतम् ॥ १ ॥

मत्तेभकुम्भपरिपातिनि कुङ्कुमार्द्रे
कान्तापयोधरतटे रतिखेदखिन्नः ।
वक्षो निधाय भुजपञ्जरमध्यवर्ती
धन्यः क्षपां क्षपयति क्षणलब्धनिद्रः ॥ २ ॥

पुष्पोद्भेदमवाप्य केलिशयनाद्दूरस्थया चुम्बने
कान्तेन स्फुरिताधरेण निभृतं भ्रूसंज्ञया याचिते ।
आच्छाद्य स्मितपूर्वगण्डफलकं चेलाञ्चलेनाननं
मन्दान्दोलितकुण्डलस्तबकया तन्व्या विधूतं शिरः ॥ ३ ॥

इन्दुर्यत्र न निन्द्यते न मधुरं दूतीवचः श्रूयते
नालापा निपतन्ति बाष्पकलुषा नोपैति कार्श्यं वपुः ।
स्वाधीनामनुकूलितां च गृहिणीमालिङ्ग्य यत्सुप्यते
तत्किं प्रेमगृहाश्रमव्रतमिदं कष्टं समाचर्यते ॥ ४ ॥

कान्ते तल्पमुपागते विगलिता नीवी स्वयं बन्धना-
द्वासो विश्लथमेखलागुणधृतं किञ्चिन्नितम्बे स्थितम् ।
एतावत्सखि वेद्मि केवलमहं तस्याङ्गसङ्गे पुनः
कोऽयं के वयमत्र किं नु सुरतं स्वल्पापि मे न स्मृतिः ॥ ५ ॥ §

अलं कमलजन्मना कमललोचनेनाप्यलं
सहस्रनयनादयः क्वचन दूरतः [1]शेरताम् ।
प्रतिक्षणविजृम्भणैरुभयबाहुकूलङ्कषैः
स्तनत्रुटितकञ्चुकं नमत यौवनं योषिताम् ॥ ६ ॥

हृदि स्थिताय स्थगिताम्बराय
स्वयम्भुवे चन्दनचर्चिताय ।
नखक्षतेन्दुद्युतिभूषणाय
नमो मृगाक्षीस्तनशङ्कराय ॥ ७ ॥

---

§ Amaru.
१. शोचताम्–$S_1$.



## ॥ जातिपद्धतिः ॥ ४६ ॥

धूलीधूसरतनवो राज्य[1]स्थितिकल्पितैकनृपाः ।
धृतमुखवाद्यविकाराः क्रीडन्ति सुनिर्भरं डिम्भाः ॥ १ ॥

शृङ्गं गिरेः श्रयति दिक्षु ददाति दृष्टिं
जृम्भां तरङ्गयति जिघ्रति गन्धवाहम् ।
वालं विवर्तयति पुष्यति पूर्वकायं
दन्तावलेन्द्रदमनप्रणयी मृगेन्द्रः ॥ २ ॥

तिर्यक्पश्यति पृष्ठतोऽपसरति स्तब्धीकरोति श्रुती
शिक्षां न क्षमते शिरो विधुनुते घण्टास्वनायेर्ष्यति ।
सन्देग्धि प्रतिहस्तिनं प्रकुपितो दानाम्बुगन्धं निजं
क्ष्मामाहन्ति करेण याति न वशं क्रोधोद्यतः कुञ्जरः ॥ ३ ॥

पश्चादङ्घ्री प्रसार्य त्रिकन[3]तिविततं द्राघयित्वाङ्गमुच्चैः
आसाद्याभुग्नकण्ठो मुखमुरसि सटाधूलिधूम्रं विधाय ।
घासग्रासाभिलाषादनवरतचर[4]प्रोथतुण्डस्तुरङ्गो
मन्दं शब्दायमानो विलिखति शयनादुत्थितःक्ष्मां खुरेण ॥ ४ ॥

गर्जित्वा मेघधीरं प्रथममथ शनैर्मण्डलीकृत्य देहं
शृङ्गाभ्यां दारयन्तावभिमुखमवनिं दारयन्तौ खुराग्रैः ।
मन्दं मन्दं समेत्य स्थिरनिहितपदं शृङ्गघातैः सरोषं
युध्येते व्यायताङ्गौ जटिलततचलत्पुच्छवन्तौ महोक्षौ ॥ ५ ॥

आहत्याहत्य मूर्ध्ना द्रुतमनुपिबतः प्रस्नुतं मातरूधः
किञ्चित्कुञ्चैकजानोरनवरतचलच्चारुपुच्छस्य धेनोः ।
उत्कर्णं तर्णकस्य प्रमुदितहृदया दत्तहुङ्कारमुद्रा
विस्रंसिक्षीरफेनाधिकधवलमुखस्याङ्गमातृप्ति लेढि ॥ ६ ॥

तिर्यक्पादतले प्रसार्य तरसा रज्जुं विसृज्यानता
कूपान्तर्निहितेक्षणा चपलहृक्कुम्भं विपूर्याम्भसा ।
आलोकालकमात्तकङ्कणवरं पर्यायनृत्यत्कुचं
रज्जाकर्षणतत्परा रमयते रामा मदीयं मनः ॥ ७ ॥
व

---

१. °ज्ञा–$S_1$. २. काल°–$S_1$. ३. °म°–$S_1$.
४. °रत्प्रो°–$S_1$.

## ॥ हास्यपद्धतिः ॥ ४७ ॥

प्रायश्चित्तं मृगयते यः प्रियापादताडितः ।
क्षालनीयं शिरस्तस्य कान्तागण्डूषशीधुभिः ॥ १ ॥

केतक्यः कण्टकैर्व्याप्ता नलिन्यः पङ्कसम्भवाः ।
विलासिन्यश्च कुट्टन्या क्व रत्नमनुपद्रवम् ॥ २ ॥

रण्डाः पाषण्डिभिर्व्याप्ता भर्तृभिः कुलयोषितः ।
वेश्या द्रविणमिच्छन्ति वयं करपरायणाः ॥ ३ ॥

तपोच्छ्रितान् पातयतः पतितानुद्धरिष्यतः ।
विधातुरिव दृश्यन्ते भगचित्रा विभूतयः ॥ ४ ॥

वैयाकरणसिंहेन योऽपशब्दमृगो हतः ।
कुलटैर्गणकैर्वैद्यैर्याज्ञिकैः स तु भक्षितः ॥ ५ ॥

प्रमुदितशषसविशेषा येषां भाषा समुन्मिषति ।
गुदवदनविवरभेदो दन्तैरनुमीयते परं तेषाम् ॥ ६ ॥

नपुंसकमिति ज्ञात्वा तां प्रति प्रेषितं मनः ।
तत्तु तत्रैव रमते हताः पाणिनिना वयं ॥ ७ ॥

रे मूर्खा न विरोद्धव्यं नित्यमक्षरकोविदैः ।
साक्षरा विपरीताश्चेद्राक्षसा एव केवलम् ॥ ८ ॥

किं कारणं स्तनद्वन्द्वे पतितं ब्रूहि ते प्रिये ।
पश्याधः खनने मूर्ख गिरयोऽपि पतन्ति हि ॥ ९ ॥

गणयति गगने गणिकश्चन्द्रेण समागमं विशाखायाः ।
विविधभुजङ्गगृहीतां स्वगृहे गृहिणीं न जानाति ॥ १० ॥

अधरामृतेन पित्तं नश्यति वायुः पयोधरोष्णेन ।
अनवरतरतेन कफं त्रिदोषशमनं वपुस्तस्याः ॥ ११ ॥

छिद्रेष्वनर्था बहुलीभवन्तीत्यलीकमेतद्भुवि सम्प्रवादः ।
छिद्रं पुरस्कृत्य विलासिनीनामर्था भवन्तीह नचाप्यनर्थाः ॥ १२ ॥

किं किं पश्यसि ते योनौ त्रैलोक्यमिह तिष्ठति ।
पश्य पश्य विशालाक्षी गर्दभं मम कम्बलम् ॥ १३ ॥



कटी मुष्टिग्राह्या द्विपुरुषकरग्राह्यमुदरं
स्तनौ घण्टालोलौ जघनमिव गन्तुं व्यवसितौ ।
स्मितं भेरीरावो मुखमपि च यत्सज्जयकरं
तथाप्येषा रण्डा प्रमदयति भिक्षूनतितराम् ॥ १४ ॥

बृहत्कुक्षिस्तथैवास्ते युगपद्रतचुम्बनम् ।
तथा नास्ति स्वहस्तेन शौचं गुह्यस्य दर्शनम् ॥ १५ ॥

अहो मासोपवासिन्या वैशिष्ट्यं केन वर्ण्यते ।
अक्षालयित्वा नाश्नाति पञ्चगव्येन मेहनम् ॥ १६ ॥

इति सुभाषितसुधानिधिसंग्रहे कामपर्व समाप्तम् ।

---

# ॥ मोक्षपर्व ॥

मोक्षपर्वणि कथ्यन्ते विषयाणां विनिन्दनम् ।
अनित्यता शोकसन्तोष वैराग्यं तीर्थसेवनम् ॥ १ ॥

तोषभक्तिविवेकाश्च भावनाज्ञानमुक्तयः ।
स्तोत्रं मोहश्च सङ्कीर्णं सुभाषितसुधानिधौ ॥ २ ॥

## ॥ विषयनिन्दापद्धतिः ॥ १ ॥

रागो नाम मनश्शल्यं गुणद्रविणतस्करः ।
राहुर्विद्याशशाङ्कस्य तपोवनहुताशनः ॥ १ ॥

अन्यत्र भीष्माद्गाङ्गेयादन्यत्र च हनूमतः ।
हरिणीपादमात्रेण चर्मणा मोहितं जगत् ॥ २ ॥

विषस्य विषयाणां च दूरमत्यन्तमन्तरम् ।
उपभुक्तं विषं हन्ति विषयाः स्मरणादपि ॥ ३ ॥

आशालतापरिवृतं बद्धमूलमविद्यया ।
को हि तापयितुं शक्तः सुखेन भवपादपम् ॥ ४ ॥

जन्मान्तरशताभ्यस्तविषयेषु गतिर्नृणाम् ।
जरद्गौरिव सस्येभ्यो दुःखेन विनिवार्यते ॥ ५ ॥

विरमत बुधा योषित्सङ्गात्सुखात्क्षणभङ्गुरात्
कुरुत करुणामैत्री[1]प्रेक्षावधूजनसङ्गमम् ।
न खलु नरके हाराक्रान्तं वधूस्तनमण्डलम्
शरणमथवा श्रोणीबिम्बं रणन्मणिमेखलम् ॥ ६ ॥

भिक्षाटनं तदपि नीरसमेकवारं
शय्या मही परिजनो निजदेहमात्रम् ।
वस्त्रं च जीर्णपटखण्डमयी च कन्था
हा हा तथापि विषया न परित्यजन्ति ॥ ७ ॥

१. °पेक्षा°–$S_1$.



## ॥ अनित्यतापद्धतिः ॥ २ ॥

पृथिवी दह्यते येन मेरुश्चापि विशीर्यते ।
शुष्यते सागरजलं शरीरे तस्य का कथा ॥ १ ॥

मेघच्छाया खलप्रीतिर्नवसस्यानि योषितः ।
किञ्चित्कालोपभोग्यानि यौवनानि धनानि च ॥ २ ॥

यथा हि पथिकः कश्चिच्छायामाश्रित्य विश्रमेत् ।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥ ३ ॥

संयोगा विप्रयोगाश्च जातानां प्राणिनां ध्रुवं ।
बुद्बुदा इव तोयेषु भवन्ति न भवन्ति च ॥ ४ ॥

गतं शोचति यो नाम स प्रायः शोच्यते बुधैः ।
छिन्नहस्तो विहस्तः(?)थ कथं बध्नाति कङ्कणम् ॥ ५ ॥

यथार्चिषोऽग्नेः पवनस्य वेगो मरीचयोऽर्कस्य नदीषु चापः ।
गच्छन्ति चायान्ति च सन्ततास्तु तद्वच्छरीराणि शरीरिणां च ॥ ६ ॥

## ॥ शोकपद्धतिः ॥ ३ ॥

मानसेनैव दुःखेन शरीरमुपतप्यते ।
अयःपिण्डेन तप्तेन कुम्भसंस्थमिवोदकम् ॥ १ ॥

अकाण्डजातपातानामार्द्राणां मर्मभेदिनाम् ।
गाढशोकप्रहाराणामचिन्तैव महौषधम् ॥ २ ॥

पान्थानामिव वर्त्मनि क्षितिरुहां नद्यामिव भ्रश्यतां
मेघानामिव पुष्करे जलनिधौ सांयात्रिकाणामिव ।
संयोगः पितृमातृबन्धुतनयभ्रातृप्रियाणां सदा
सिद्धो दूरवियोग एव विदुषां शोकोदयः कस्तदा ॥ ३ ॥

शोको नाशयते शौर्यं शोको नाशयते सुखम् ।
शोको नाशयते सर्वं नास्ति शोकसमो रिपुः ॥ ४ ॥

## ॥ सन्तोषपद्धतिः ॥ ४ ॥

सर्वत्र सम्पदस्तस्य सन्तुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मास्तृतैव भूः ॥ १ ॥

सुखं वा यदि वा दुःखं द्वेष्यं वा यदि वा प्रियम् ।
प्राप्तं प्राप्तमुपासीत हृदयेनाविदूयता ॥ २ ॥

## ॥ वैराग्यपद्धतिः ॥ ५ ॥

किं धनेन करिष्यन्ति देहिनो भङ्गुराशयाः ।
यदर्थं धनमिच्छन्ति तच्छरीरमशाश्वतम् ॥ १ ॥

यावतः कुरुते जन्तुः सम्बन्धान्मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥ २ ॥

विहाय कमलालयाविलसितानि विद्युच्छटी–
विडम्बनपटूनि मे विहरणं विधत्तां मनः ।
कपर्दिनि कुमुद्वतीरमणखण्डचूडामणौ
कटीतटतटीभवत्करटिचर्मणि ब्रह्मणि ॥ ३ ॥

आशायाः प्रशमय्य वेगमखिलं निर्णीय विश्वं जडं
नीत्वा शान्तिपथः शनैस्तत इतो दोलायमानं मनः ।
कृत्वा चेतसि केवलं पशुपतेरैश्वर्यमव्याहतं
कोणे कुत्रचिदास्महे वयममी कोलाहलैः किं फलम् ॥ ४ ॥

## ॥ तीर्थसेवापद्धतिः ॥ ६ ॥

समीपतीर्थस्नानाच्च दूरतीर्थं विशिष्यते ।
ऋषीणां परमं गुह्यमिदं भरतसत्तम ॥ १ ॥

यावदस्थि मनुष्यस्य गङ्गातोयेषु तिष्ठते ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥ २ ॥

१. डोलायाः–$S_1$.  २. °येऽव° $S_1$.  ३. °र्गे लोके $S_1$.



स्मृताभिलषिता दृष्टा स्पृष्टा पीतावगाहिता ।
गङ्गा तारयेत नृणामुभौ वंशौ विशेषतः ॥ ३ ॥

सेतुं दृष्ट्वा समुद्रस्य ब्रह्महा गुरुतल्पगः ।
मुच्यते सर्वपापेभ्यः कृतघ्नोऽपि विशुध्यति ॥ ४ ॥

कावेरीं च समासाद्य विहृतामप्सरोगणैः ।
तत्र स्नात्वा नरो राजन् गोसहस्रफलं लभेत् ॥ ५ ॥

## ॥ तोषपद्धतिः ॥ ७ ॥

वयमिह परितुष्टा वल्कलैस्त्वं दुकूलैः
सममिह परितोषो नो विशेषोऽस्ति कश्चित् ।
स च भवतु दरिद्रो यस्य तृष्णा विशाला
मनसि च परितुष्टे कोऽर्थवान्को दरिद्रः ॥ १ ॥

ममेति परमं दुःखं न ममेति परं सुखम् ।
द्वे हि बन्धस्य मोक्षस्य ममेति न ममेति च ॥ २ ॥

तस्य चिन्तामणिर्गेहे तस्य कल्पतरुः करे ।
किङ्करस्तस्य सन्तुष्टं सन्तुष्टं यस्य मानसम् ॥ ३ ॥

## ॥ भक्तिपद्धतिः ॥ ८ ॥

अश्वमेधसहस्राणां सहस्रं यः समाहरेत् ।
नासौ पदमवाप्नोति मद्भक्तैर्यदवाप्यते ॥ १ ॥

मद्भक्तान्शूद्रसामान्यानवमन्यन्ति ये नराः ।
नरकेष्ववमायान्ति वर्षकोटीन्नराधमाः ॥ २ ॥

किं यज्ञैर्विपुलायासैः किं व्रतैः कायशोषणैः ।
अव्याजसेवा सुभगा भक्तिर्येषां जनार्दने ॥ ३ ॥

१. यस्य. $S_1$.  २. °च° $S_1$.  ३. महेश्वरे– $S_1$.

## ॥ विवेकपद्धतिः ॥९॥

अभ्यस्तैः किमु पुस्तकैः किमथवा चेष्टाभिरेकान्ततः
कष्टाभिः किमु देवतादिविषयैः पूजाप्रणामादिभिः ।
चेतश्चेदिदमर्कतूलतरलं शक्येत रोद्धुं बलात्-
कामास्ते करपल्लवे खलु मताः सर्वाणि सौख्यान्यपि ॥ १ ॥

## ॥ भावनापद्धतिः ॥ १० ॥

न काष्ठे विद्यते देवो न शिलायां न कर्दमे ।
भावे हि विद्यते देवस्तस्माद्भावेन भावयेत् ॥ १ ॥

भावशुद्धिः परं शौचं प्रमाणं सर्ववस्तुषु ।
अन्यथाऽऽलिङ्गते भार्यां भावेन दुहितान्यथा ॥ २ ॥

## ॥ ज्ञानपद्धतिः ॥ ११ ॥

ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ।
तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १ ॥

तमःपरिवृतं वेश्म यथा दीपेन दीप्यते ।
तथा बुद्धिप्रदीपेन शक्य आत्मा निरीक्षितुम् ॥ २ ॥

## ॥ मोक्षपद्धतिः ॥ १२ ॥

पञ्चभूतात्मके देहे को नु देही तमोवृतः ।
अहमेतदितीत्युच्चैः कुरुते कर्मभिर्मतम् ॥ १ ॥

एषोऽस्मीति विचिन्त्यते न परितश्चित्तेन सार्धं कृते
तत्त्वानां विलये चिदात्मनि परिज्ञाने त्वमर्थे पुनः ।
श्रुत्वा तत्त्वमसीति बाधितभवध्वान्तं सदात्मप्रभं
शास्त्रज्योतिरनामयं तदुदितानन्दं समुद्योतते ॥ २ ॥

---

१ चित्ताना°–$S_1$.



## ॥ स्तोत्रपद्धतिः ॥ १३ ॥

अपराधसहस्रभाजनं पतितं भीममहार्णवोदरे ।
अगतिं शरणागतं हरे कृपया केवलमात्मसात्कुरु ॥ १ ॥

निमज्जतोऽनन्तमहार्णवान्तः
चिराय मे कूलमिवासि लब्धः ।
त्वयापि लब्धं भगवन्निदानी-
मनुत्तमं पात्रमिदं दयायाः ॥ २ ॥

तवामृतस्यन्दिनि पादपङ्कजे
निवेशितात्मा कथमन्यदिच्छति ।
स्थितेऽरविन्दे मकरन्दनिर्भरे
मधुव्रतो नेक्षुरसं हि वीक्षते ॥ ३ ॥

## ॥ मोहपद्धतिः ॥१४॥

विज्ञातवदविज्ञातमभिन्नमपि भिन्नवत् ।
असत्यं सत्यवद्भाति मायामयमिदं जगत् ॥ १ ॥

अन्यथा वेदपाण्डित्यं शास्त्रपाण्डित्यमन्यथा ।
अन्यथा तत्पदं शान्तं लोकाः क्लिश्यन्ति चान्यथा ॥ २ ॥

## ॥ सङ्कीर्णपद्धतिः ॥ १५ ॥

उडुगणपरिवारो नायकोप्योषधीनाममृतमयशरीरः कान्तियुक्तोऽपि चन्द्रः ।
स खलु विगतरश्मिर्मण्डलं प्राप्य भानोः परसदननिविष्टः को लघुत्वं न याति ॥ १ ॥

किमत्र चित्रं तत्सन्तः परानुग्रहतत्पराः ।
न हि स्वदेहसौख्याय जायन्ते चन्दनद्रुमाः ॥ २ ॥

अद्यापि नोज्झति हरः किल कालकूटं
कूर्मो बिभर्ति धरणीं किल पृष्ठभागे ।

---

१ °नि°–$S_1$. २ °रसं°–समीहते–$S_1$.

अम्भोनिधिर्वहति दुस्सहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ॥ ३ ॥

किं तेन हेमगिरिणा रजताद्रिणा वा
यावाश्रिता हि तरवस्तरवस्त एव ।
वन्दामहे मलयमेव तदाश्रयाणां
शाकोटनिम्बकुटजा अपि चन्दनन्ति ॥ ४ ॥

अपि सुपवित्रे गोत्रे दुश्चरितोऽपि कश्चिदुद्भवति ।
शुद्धेऽपि दुग्धजलधौ न भवेत्किं कालकूटमपि गरलम् ॥ ५ ॥

नाभूतपूर्वं न च केन दृष्टं
न सूयते हेममयी कुरङ्गः ।
तथापि तृष्णा रघुनन्दनस्य
विनाशकाले विपरीतबुद्धिः ॥ ६ ॥

दण्डः स्त्रीणामसंसर्गो मित्रदण्डो ह्यभाषणम् ।
तस्करस्य वधो दण्डो दास्या दण्डो हि मुण्डनम् ॥ ७ ॥

रूपयौवनसम्पन्ना विशालकुलसम्भवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ८ ॥

क्रोधो मूलमनर्थानां क्रोधः संसारबन्धनम् ।
क्रोधो ह्यर्थक्षयकरस्तस्मात्क्रोधं विवर्जयेत् ॥ ९ ॥

भवेद्यदि खलस्य श्रीः सर्वलोकविनाशिनी ।
यथा दवाग्नेः पवन उरगस्य पयो यथा ॥ १० ॥

एकभुक्तं सदारोग्यं द्विभुक्तं बलवर्धनम् ।
त्रिभुक्ते व्याधिपीडा स्स्याच्चतुर्भुक्ते मृतिर्ध्रुवम् ॥ ११ ॥

एकेन शुष्कवृक्षेण दह्यमानेन वह्निना ।
दह्यते तद्वनं सर्वं दुष्पुत्रेण कुलं यथा ॥ १२ ॥

कर्णोत्पलं कटाक्षाः कान्तिस्ते कनककञ्चुकविशेषः ।
हसितानि सिन्धुकन्ये हारास्स्तनशैलनिर्झरविहाराः ॥ १३ ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥ १४ ॥

जगज्जीवनमव्याद्वः शम्भोरम्भोमयं वपुः ।
ब्रह्माण्डमपि यस्यान्तस्तरत्तुम्बीफलायते ॥ १५ ॥



॥ श्रीशंकरार्यगुरवे नमः ॥

वाहीकृतमहाधेनू गणाधिप विनायक ।
भवतां भवतां पूज्यौ पार्वतीपरमेश्वरौ ॥

इति सुभाषितसुधानिधिसङ्ग्रहे मोक्षपर्व समाप्तम् ।

# INDEX OF VERSES

द

# Errata

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| १ | Last but one | Nirnyasagar | Nirnayasagar |
| २ | 13 | राज्ज्ञोऽभूत् | राज्ञोऽभूत्। |
| २ | 16 | क्चित् | क्वचित् |
| ३ | 16 | प्रयोक्तृणां | प्रयोक्तॄणां |
| ६ | Footnote | Śṛṅgāraprakāśa | Sarasvatīkaṇṭhā-bharaṇa |
| ७ | 9 | उद्धृत्य | उद्धृत्य |
| १० | 19 | झतिटि | झटिति |
| ११ | 21 | न्यक्कर्वन् | न्यक्कुर्वन् |
| १२ | 5 | दण्डोऽङ्घ्रि | दण्डोऽङ्घ्रि |
| १३ | 1 | सज्जीवन | सञ्जीवन |
| १३ | 5 | पुज्जं | पुञ्जं |
| १३ | 6 | शिज्जन्मज्जीर | शिञ्जन्मञ्जीर |
| १३ | 12 | हष्ट्वा | दृष्ट्वा |
| १३ | 17 | कृताज्जलिः | कृताञ्जलिः |
| १३ | 20 | हय्यङ्गवीन | हैय्यङ्गवीन |
| १६ | Footnote-2 | Uiprekshāvallabha | Utprekshāvallabha |
| १८ | 10 | पूष्णन्तु | पुष्णन्तु |
| १९ | 11 | निष्ट्यूत | निष्ठ्यूत |
| २० | 1 | ह्रिया | ह्रिया |
| २० | 9 | वह्नयो | वह्नयो |
| २१ | 6 | सिकता | सिक्ता |
| २१ | 10 | बन | वन |
| २१ | 23 | श्व | इव |
| २३ | 4 | यद्ब्राह्मणस्य | ब्राह्मणस्य |
| २३ | 9 | गुप्तय | गुप्तये |
| २६ | 19 | पाडित्यं | पाण्डित्यं |
| ३२ | 8 | सखीर्वृत्तिं | सखीर्वृत्तिं |
| ४० | 12 | भवत्येब | भवत्येव |



| Page | Line | Incorrect | Correct |
|---|---|---|---|
| ४२ | 7 | कतृणि | कर्तॄणि |
| ४३ | Footnote-a | Pancatanta | Panchatantra |
| ४४ | 5 | सुबहबो | सुबहवो |
| ४४ | 18 | घव्यति | घटयति |
| ४५ | 17 | रार्त्रिगमि | रात्रिर्गमि |
| ४८ | 2 | कुलायंः | कुलायं |
| ४९ | 2 | बलिनापि विद्विषे | बलिना विद्विषे |
| ४९ | 12 | द्वास्थौं | द्वाःस्थो |
| ५१ | 5 | राजालोकस्य | राजा लोकस्य |
| ५१ | 25 | हेतुर्वृद्धेः | हेतुर्वृद्धेः |
| ५३ | 20 | प्रजास्तैरविधिपालिता | प्रजा अविधिपालिताः। |
| ६१ | 9 | पभवः | प्रभवः |
| ६९ | 6 | घिया | धिया |
| ८१ | 6 | क़र | कार |
| ८४ | 20 | किञ्चिदत्त्याहरेत् | किञ्चिदप्याहरेत् |
| ८७ | 18 | पुरुषाः | पूरुषाः |
| ८९ | 8 | मिभाषिना | भिभाषिणा |
| ८९ | 23 | पृथिवी | पृथ्वी |
| ९२ | 16 | लघुकृतः | लघूकृतः |
| ९२ | Last line | स्त्रियः | स्त्रियः |
| ९३ | 16 | कम्प्रन्ते | कम्पन्ते |
| ९४ | 13 | गार्जित्वा | गर्जित्वा |
| ९६ | 17 | मश्रूण्यापि | मश्रूण्यपि |
| ९९ | 5 | सवम्वमेव | सर्वस्वमेव |
| ९९ | 20 | दृष्ट | दृष्टे |
| १०० | 22 | रत्नाकार | रत्नाकर |
| १०१ | 21 | निशामुखम् | प्रियामुखम् |
| ११५ | 10 | पतिप्यन् | पतिष्यन् |
| १२९ | 15 | सर्पाः | सर्पः |
| १२९ | 8 | प्रवर्तिंनि | प्रवर्तिनी |
| १२९ | 15 | सर्पाः | सर्पः |
| १३१ | 16 | प्रज्ञया | प्रज्ञया |
| १३६ | 18 | अदैवमातृका | अदेवमातृका |

| Page | Line | Incorrect | Correct |
|---|---|---|---|
| १३७ | 10 | जङ्गलाः | जाङ्गलाः |
| १४४ | 18 | शस्त्रसचिवः | शस्त्रसचिवः |
| १४८ | 9 | वस्त्रे | वस्त्रे |
| १५० | 10 | लोष्ठेन | लोष्टेन |
| १५० | 19 | मर्ध्नि | मूर्ध्नि |
| १५५ | 4 | मान | मानः |
| १५६ | 13 | मदसिक्तमुखैमृगाधिपः | मदसिक्तमुखैर्मृगाधिपः |
| १५७ | 9 | चरितर्मपयति | चरितमर्पयति |
| १५७ | 27 | वडबानलः | वडवानलः |
| १६० | 17 | त्यजन्ते | त्यज्यन्ते |
| १६२ | 12 | °स्तत्रः | °त्रस्तः |
| १७० | 12 | स्तोति | स्तौति |
| १७० | 25 | नैवोद्धेते | नैवोद्धृते |
| १७३ | Footnote 1 | Bhārtṛhari | Bhartṛhari |
| १८२ | 23 | गुणेयु | गुणेषु |
| १८७ | 19 | त्व | त्वं |
| १९८ | 3 | विष्ठति | तिष्ठति |
| १९९ | 11 | दहीति | देहीति |
| २०० | 24 | कृच्छ्रेश्वापत् | कृच्छ्रेश्वापत् |
| २०८ | 12 | स्फुटद्ग्रावफूर्जज्ज्वलन | स्फुटाद्ग्रवस्फूर्जज्ज्वलन |
| २०८ | 18 | जरद्भल्लूक | जरद्भूल्लूक |
| २०८ | 20 | सीदच्छुक्का: | सीदच्छुकाः |
| २०९ | 14 | मणिर्जह्योर्मि- | मणिर्जह्योर्मि- |
| २१४ | 6 | विमु ञ्चदम्भः | विमुञ्चदम्भः |
| २१८ | 23 | विम्वाधर | विम्बाधर |
| २३५ | 9 | त्काण्यै | त्कार्ण्यै |
| २३६ | 6 | तन्वङ्गया | तन्वङ्ग्या |
| २३९ | 6 | विवर्तयाति | विवर्तयति |
| २३९ | 12 | पश्चादङ्गी | पश्चादग्री |
| २४० | Last line | विशालाक्षी | विशालाक्षि |
| २४५ | 2 | तारयेत | तारयते |
| २४६ | 20 | परिज्ञाने | परिज्ञाते |
| २४८ | 22 | स्स्याञ्च° | स्याञ्च° |
| २४८ | 22 | त्रिभुक्ते व्यधि | त्रिभुक्तेर्व्याधि |
| २४८ | 22 | भुंक्ते र्मृति | भुक्तेर्मृति |